LAGHU-GRANTHAMĀLĀ

[ Vol. 49 ]

# ŚRĪRĀMĀNUJAMATASAMGRAHA

OF

CATURVEDAŚATAKRATU

ŚRĪNIVĀSAPĀṬṬARĀRYA MAHĀDEŚIKA

With Sanskrit Commentary

BY

NĀVALPĀKKAṂ CATURVEDAŚATAKRATU

VALAYAPEṬṬAI ŚRĪNIVĀSA TĀTĀCĀRYA MAHĀDEŚIKA

EDITED BY

N. K. RĀMĀNUJA TĀTĀCĀRYA

( PRESIDENT AWARDEE )

NYĀYAMĪMĀṀSĀŚIROMAṆI

VEDAVEDĀNTAVIDVĀN

Ex. CHIEF SANSKRIT PAṆḌITA OF THE

T. M. S S. M. LIBRARY, TANJORE




VARANASI

1992

**Research Publication Supervisor—**
**Director, Research Institute,**
Sampurnanand Sanskrit University
Varanasi.

□

**Published by—**
**Dr. Harish Chandra Mani Tripathi**
**Publication Officer,**
Sampurnanand Sanskrit University
Varanasi—221 002.

□

Available At—
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi—221 002.

□

First Edition, 500 Copies
Price—Rs. 10.00

□

**Printed by—**
**VIJAY PRESS,**
Sarasauli, Bhojubeer
Varanasi.

लघु-ग्रन्थमाला

[ ४९ ]

श्री० उ० वे० ति० च० श० नावल्पाक्कं श्रीनिवासपाट्टरार्य-
महादेशिकविरचितः

# श्रीरामानुजमतसङ्ग्रहः

श्री० उ० वे० ति० च० श० नावल्पाक्कं वलयपेट्टैस्वामीति
विख्यातेन श्रीनिवासताताचार्यमहादेशिकेन प्रणीतया
व्याख्यया समलङ्कृतः

सम्पादकः
श्री० उ० वे० ति० च० श० नावल्पाक्कं वलयपेट्टै
ना० कृ० रामानुजताताचार्यः ( व्याख्यातृपौत्रः )
राष्ट्रपतिसम्मानितः,
न्यायमीमांसाशिरोमणिः, वेदवेदान्तविद्वान्
भूतपूर्वप्रधानसंस्कृतपण्डितः
सरस्वतीमहालग्रन्थालयः, तञ्जावूर




वाराणस्याम्

२०५० तमे वैक्रमाब्दे    १९१५ तमे शकाब्दे    १९९३ तमे खैस्ताब्दे

अनुसन्धान-प्रकाशन-पर्यवेक्षकः—
निदेशकः, अनुसन्धान-संस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी ।

□

प्रकाशकः—
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी–२२१ ००२.

□

प्राप्तिस्थानम्—
विक्रय-विभागः,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी–२२१ ००२.

□

प्रथमं संस्करणम्, ५०० प्रतिरूपाणि
मूल्यम्— १० = ०० रूप्यकाणि

□

मुद्रकः—
विजय प्रेस,
सरसौली, भोजूबीर
वाराणसी ।

॥ श्रीः ॥

॥ श्रीमते श्रीनिवासतातयार्यमहादेशिकाय नमः ॥

# प्रस्तावना

**ख्यातश्रीशैलवंश्याण्णयगुरुकरुणावाप्तसम्पूर्णबोधात्**
**श्रीमद्वेदान्तरामावरजगुरुमणेः प्राप्तवेदान्तयुग्मम् ।**
**तद्वंश्याद्वेङ्कटेशाद्विबुधपरिबृढात्पञ्चसंस्कारभाजं**
**वन्दे तद्वंशजातं गुरुमणिमनघं श्रीनिवासार्यसूरिम् ॥**

अथेदानीं विशिष्टाद्वैतदर्शनस्य प्रतितन्त्रसिद्धान्तं पदार्थतत्त्वं च लघुनोपायेन अक्लेशेनाधिजिगांसूनां कृते उपकाराय श्रीश्रीनिवासपाट्टराचार्यप्रणीतो **रामानुजमत-संग्रहाख्यो** न्यायादिदर्शनेषु तर्कसंग्रहादिग्रन्थ इव प्रकरणग्रन्थः प्राकाश्यं नीयते। अस्मिन् लघुग्रन्थे भागद्वयमस्ति, तत्र प्रथमो भागो वाक्यरूपेण रामानुजमतसिद्धान्तस्य प्रतिपादनपरः, द्वितीयश्च पद्यरूपेण । तत्र द्वितीयभागव्याख्यानावसरे श्रीमद्भिर्व्याख्यातृ-वर्यैः ग्रन्थस्यास्यावतरणबीजमित्त्थमुपवर्णितम्—यथैव पुरा पाण्ड्यदेशे श्रीविष्णुचित्त-महाभागैः पेरियालवार इति विख्याते राजसभायां श्रीमन्नारायण एव परतत्त्वमिति परतत्त्वनिर्णयाख्यग्रन्थमुखेन निरणायि, तथैवेमे श्रीनिवासपाट्टरार्यस्वामिपादा अपि चोलदेशे तञ्जापुर्यां राजसभायां पञ्चचत्वारिंशद्दिनानि (४५) यावत् नानामतसिद्धान्ता-भिज्ञैर्विद्वद्भिस्सह वाक्यार्थं कृत्वा विशिष्टाद्वैतसिद्धान्तस्समर्थितः। तस्मिन्नवसरे निर्णीतोऽर्थः पद्यद्वयेन निबद्ध इति । ग्रन्थस्यैव लघुत्वात् तत्प्रतिपाद्यविषयपरिचयस्सुलभ इति ग्रन्थकृत्परिचयादि किञ्चित् प्रस्तूयते ।

## मूलग्रन्थकर्तृपरिचयः

एतद्ग्रन्थप्रणेतारः श्रीमन्नाथमुनिप्रमुखवेदान्तस्थापकदिव्यसूर्यावतारचारुत-रश्रीशैलवंशपयःपयोनिधिराकानिशाकराग्निष्टोमसर्वपृष्ठाद्यनेकक्रतुकरणतोषिताद्यदिव्य-दम्पतीकटाक्षसंधुक्षितसकलविभवानां नावल्पाक्क श्री( अय्या )कुमारतातदेशिकानां पौत्राः, नावल्पाक्कं श्रीकुमारतातदेशिकसुधीमणिकटाक्षलब्धसमस्तशास्त्ररहस्यार्थ-जातानां कुमारतातदेशिकचरमपुत्राणां श्रीवेङ्कटेशपाट्टरार्याणां पुत्राः, अशेष-विपक्षपक्षप्रतिक्षेपदक्षगहनगम्भीरस्वीयवचोगुम्भसम्पादितयशोविराजितदिगन्ताः चतुर्वेद-

शतक्रतुश्रीनिवासपाट्टरार्य इति सुगृहीतनामधेयाः । एतेषां पितामहपादाः ति० च० श० नावल्पाक्कं श्रीकुमारताातदेशिकवर्याः चोलदेशे तञ्जापुर्यां श्रीरघुनाथनायकराजगुरव आसन् । रघुनाथनायककालश्च A. D. अष्टादशशताब्दीति निश्चीयते। श्रीकुमारतातदेशिकानां सप्त पुत्राः । तेषु प्रथमपुत्रो नीलमेघताताचार्यः, तदौरसवंशस्था नावल्पाक्काग्रहारे अद्यापि निवसन्ति । प्रकृतग्रन्थकर्तृव्याख्यातारोऽपि प्रथमपुत्रवंशस्थाः कुमारतातदेशिकेभ्योऽष्टमपुरुषाः । चरमपुत्रस्य वेङ्कटेशपाट्टरार्यस्य वंशस्थाः कुम्भघोणक्षेत्रे वसन्ति । वेङ्कटेशपाट्टरार्यैरनितरसाधारणज्ञानानुष्ठानसम्पन्नान् निजपितॄनधिकृत्य **कुमारतातदेशिकवैभवप्रकाशिकेति** ग्रन्थो व्यरचि । तत एव तेषां विशेषपरिचयो विशिष्य जिज्ञासुभिरवधेयः । एतेषामौरसाचार्यवंशावलिश्चात्र प्रकाश्यते परिचयार्थम् ।

## व्याख्यातुः ग्रन्थ-कालदेशादिपरिचयः

एते प्रकृतग्रन्थव्याख्यातारो वलयपेट्टैस्वामीति विख्याताः तिरुमलै-चतुर्वेद-शतक्रतुनावल्पाक्कं श्रीनिवासतातयार्यमहादेशिकाः "नाथोपज्ञं प्रवृत्तम्" इति विशिष्टाद्वैत-दर्शनप्रवर्तकत्वेन प्रसिद्धश्रीमन्नाथमुनिप्रमुखवेदान्तस्थापकदिव्यसूर्यवितारचारुतरे वंशे "तदन्वये शुद्धिमति प्रसूतश्शुद्धिमत्तरः" इतिवत् तिरुमलै-चतुर्वेद-शतक्रतु-नावल्पाक्कं रामानुजताताचार्याणां आत्मजत्वेन (A. D. 1872) आङ्गिरसनाम्नि वत्सरे तुलामासि उत्तरप्रोष्ठपदानक्षत्रे आविरभूवन् । एतेषां माता च जन्मना नडादूरवंशोद्भवा श्रीवत्सगोत्रा जानकीति नाम्ना प्रथिता ।

इमे बाल्ये वयसि स्वपित्रा उपनयनादिसंस्कारैस्संस्कृता वयसस्त्रयोदशाभ्यन्तर-एव सलक्षणं वेदमधीयते स्म । वेदस्य मूलभागं स्ववंशस्थपूर्वपुरुषाणां श्री-उ०वे० चेल्लं स्वामिनां सन्निधावधीत्य पदपाठस्य लक्षणस्य चाध्ययनं कोत्तिमङ्गलं श्री-उ०वे०गोपालण्णेति व्यावहारिकनाम्ना प्रसिद्धानामाचार्यपादानां सलक्षणवेद–शास्त्रज्ञानसम्पन्नाना-माचारात्मगुणोपेतानां सविधे अकुर्वन् ।

तदनु तिरुवहीन्द्रपुरक्षेत्रे न्याय-मीमांसादिसामान्यशास्त्रं तत्तत्सूक्ष्मार्थ-विवेचनपूर्वकं रामानुजसिद्धान्तभास्कर-देशिकदर्शनधुरंधरेत्याद्यनेकबिरुदभूषितानां वेदन्याय-मीमांसाद्यनेकशास्त्रपारङ्गतानां वेदान्तवैजयन्ती ( कुसुमाञ्जलि-व्याख्या ) न्यायवासनाद्यनेकग्रन्थनिर्मातॄणां शिष्यपरम्परासमृद्धानां राष्ट्रपतिसम्मानितानाम्

आजीवनं नावल्पाक्काग्रहारमधिवसन्त एव यथाविधि नित्यनैमित्तिककर्मानुष्ठानपूर्वकं भगवदाराधनादिकं विधाय बहुशिष्यजनान् प्रति वेदन्यायमीमांसादि सामान्यशास्त्रं वेदान्तशास्त्रं च अध्यापितवतामस्मत्साक्षाद्गुरुवराणां "प्रजानां विनयाधानाद् रक्षणाद्भरणादपि" इत्युक्तरीत्या निस्सीमकृपया तदा तदा समुचितकार्यकर्तव्यताप्रकारादेशपूर्वकं न्यायमीमांसादिसामान्यशास्त्र-वेदान्तशास्त्रोपदेशकरणादिना विद्यावंशपितृत्वेन भावयतस्सतः सततं स्वात्मनि सेवारतानचञ्चलभक्त्या स्थितवतोऽस्मान् चिरं निरीक्ष्य स्वान्तरङ्गविषयेषु स्वान्त्येष्ट्याद्यौर्ध्वदैहिककर्मस्वपि विद्यावंशपुत्रत्वेन विभाव्य शास्त्रसंमतप्रक्रियामनुरुद्ध्य नियुक्तवतां श्री०उ० वे० ति० च० श० ना० अय्या श्रीदेवनाथताताचार्यस्वामिपादानां पितृचरणानां श्री० उ० वे० ति० च० श० **अय्या नरसिंहताताचार्याणां** ज्ञानानुष्ठानवैराग्यशेवधीनां सकलशास्त्रनिष्णातानां सन्निधावपाठिषुः। तदनन्तरमेतेषां वेदान्तशास्त्रग्रन्थाध्ययने तत्रैव विचार उदभूत्। तदा इमे श्री० उ० वे० अय्या श्रीनरसिंहताताचार्यस्वामिपादा एव इत्थमादिशन् अस्माकं श्रीशैलवंशतिलका ज्ञानवृद्धा वयोवृद्धास्तपस्विनो यतिसार्वभौमा वेदान्तरामानुजस्वामिपादाः सम्प्रति वलयपेट्टै अग्रहारमधिविराजन्ते, तत्र गत्वा वेदान्तग्रन्थकालक्षेपः कर्तव्य इति।

तेषामादेशानुसारेण एते कुम्भघोणक्षेत्रसमीपस्थं वलयपेट्टै अग्रहारं गत्वा श्रोत्रियब्रह्मनिष्ठानां ज्ञानानुष्ठानवैराग्यनिधीनां वलयपेट्टैस्वामीत्येव इदंप्रथमतया व्यावहारिकनाम्ना प्रसिद्धानां यतिवराणां श्री उ. वे. ति. च. श. नावल्पाक्कं वेदान्तरामानुजस्वामिपादानां चरणारविन्दयोर्यथाशास्त्रं गुरुपरिचर्यादिकरणपूर्वकं यथासम्प्रदायं श्रीभाष्यादिग्रन्थचतुष्टयकालक्षेपं निर्वर्त्य श्रुतप्रकाशिका-तत्त्वटीका-शतदूषण्यादिवादग्रन्थांश्चाध्यगीषत।

इमे च यतीन्द्रा आचार्यवर्याः स्वसमीपमागतान् अन्तेवासिनः प्रति वेदान्तशास्त्रग्रन्थानध्यापयन्तो मुनिवृत्त्या ऋष्याश्रम इव तत्रैवाजीवनं चिरकालं विरेजिरे। तत्क्रतुनयविचार-गायत्रीजपनिर्णय-श्रीजयन्तीनिर्णयादिबहुग्रन्थांश्च प्रणिन्युः। अतिशयितज्ञानवैराग्यादिगुणसम्पन्नानामेतेषां शिष्यगणेषु अय्याश्रीनरसिंहताताचार्यः, प्रकृतव्याख्याता वलयपेट्टैश्रीनिवासताताचार्यः, नावल्पाक्कं नरसिंहताताचार्यश्चेति त्रयः प्रसिद्धतमाः। तेषु श्री०उ०वे० अय्या स्वामिपादास्समुत्पन्नोत्कटवैराग्यवशात् तेभ्य एव परिव्राजकाचार्यस्वामिपादेभ्यो गृहीततुरीयाश्रमा वलयपेट्टैचिन्नस्वामीति व्यावहारिकनाम्ना प्रसिद्धास्तत्रैव मनागपि स्खलनं विना यतिधर्मान् यथाशास्त्रं

परिपालयन्तः कावेरीतीरे रम्यमुटजमधिवसन्त एव कञ्चन कालं चत्वारिंशत्तमे वयस्येव भगवल्लोकमासादयामासुः।

श्री. उ. वे. नावल्पाक्कं नरसिंहताताचार्यास्तु विद्याविषये अपराजितसङ्कल्पा वैराग्यशालिनो मैसूरनगरं गत्वा महामहोपाध्याय"कस्तूरिरङ्गाचार्य" इति प्रसिद्धानां चतुश्शास्त्रपारङ्गतानां विदुषां सकाशे प्राच्य-नव्यन्यायशास्त्रग्रन्थान् वादौपयिकान् क्रोड-पत्रादिप्रौढग्रन्थांश्चाधीत्य वलयपेट्टै श्री.उ.वे. नावल्पाक्कं वेदान्तरामानुजसंयमीन्द्राणां सन्निधौ वेदान्तग्रन्थकालक्षेपं च कृत्वा तिरविशनल्लरश्रीरामसुब्बाशास्त्रिणां सविधे मीमांसाशास्त्रं चाध्यैषत। उपस्थितसकलग्रन्थाश्शास्त्रे कृतभूरिपरिश्रमा इमे आचार्याः स्वाधीतं सर्वमपि कस्मैचिदुत्तमपात्रायोपदेष्टव्यं येन कञ्चन कालं शास्त्रं च जीवेदिति निश्चित्य तादृशपात्रं पूर्वलिखिताः श्री. उ. वे. अय्या श्रीदेवनाथताताचार्या इति तेभ्यस्सर्वमपि शास्त्रमुपादिशन्। तेन च स्वलक्ष्यसिद्धिर्जातेति ते चात्मानं कृतकृत्यम-मन्यन्त। तदनन्तरं काञ्चीक्षेत्र एव नावल्पाक्कं स्वामीत्येव व्यावहारिकनाम्ना चिरं विरेजिरे।

वेदवित्सु निरतिशयमादरमाविष्कुर्वन्त इमे वेदशास्त्रज्ञाननिधयो वेदपारायण-गोष्ठयां सिंह इव गम्भीरतया वर्तमानास्स्वनाम अन्वर्थयन्तः काञ्च्यामेव सहदेवीभ्यां भगवतो देवाधिराजस्य रजतविग्रहं प्रतिष्ठाप्य स्वगृहे आराधनां चक्रुः। ते च स्वप्रति ष्ठापितविग्रहस्य महाभागवतकरस्पर्शार्थिं काञ्चीं प्रति समागतानेतान् अस्मत्पितामहान् वलयपेट्टैश्रीनिवासतातयार्यमहादेशिकान् अभ्यर्थयामासुः। तैश्च तत्र करस्पर्शं विधाय भगवन्तं देवाधिराजं समभ्यर्च्य तदीयप्रार्थना सफलीकृतेति अनुशुश्रुम।

इमे प्रकृतव्याख्यातारो वलयपेट्टैश्रीमद्वेदान्तरामानुजसंयमिसार्वभौमकरुणा-कटाक्षलब्धवेदान्तरहस्यार्थजातास्तस्मिन्नेव वलयपेट्टै आश्रमे बहूनि वर्षाणि यावन्निवसन्तः स्वाचार्ययतिवराणामनन्तरकाले वलयपेट्टैस्वामीत्येव व्यावहारिक-नाम्ना प्रसिद्धास्सन्तः अभिगमनोपादानेज्यास्वाध्याययोगात्मना पञ्चधा दिनात्मककाल विभज्य तत्तत्काले अनुष्ठेयतया धर्मशास्त्रे विहितं सर्वं यथावदन्वतिष्ठन्। आजन्मशुद्धा एते प्रत्यहं ब्राह्मे मुहूर्ते उत्थाय भगवत आरभ्य गुरुपरम्परानुसन्धानं विधाय पुण्यतम-कावेरीनद्यां शास्त्रोक्तविधिना स्नात्वा सूर्योदयात्पूर्वमर्घ्यदानपूर्वकं प्रातस्सन्ध्यामुपास्य तत आश्रममागत्य औपासनं कृत्वा शिष्यगणान् प्रति श्रीभाष्यादिवेदान्तग्रन्थोपदेशं

कुर्वन्त आचारात्मगुणादिभिर्वसिष्ठादय इव विलक्षणब्रह्मतेजोवशीकृतसच्छिष्यपरम्परा-समृद्धा आसन् । तदिदं सर्वं प्रत्यक्षमनुभूय तदीयान्तेवासिषु वैदुष्यपूर्णैः पण्डितराजराष्ट्रपतिसम्मानित( D. T. )श्रीशैलताताचार्यशिरोमणिभिरित्थमनुसंहितम्—

यन्मातृकाणि चरितानि सतामिदानीं
रक्षोनिरोधमतियाति रविर्यदर्घ्यैः ।
विष्णोः पदे रसिकता मम यत्कटाक्षैः
श्रीवासताताचार्यगुरुः स जयत्युदारः ॥

प्रत्यादेशं वसिष्ठस्य दीप्तमाचारसम्पदा ।
यमाहुरिन्धे श्रीवासतातयार्यो गुरुस्सनः ॥ इति ।

पण्डितराजश्रीशैल( D. T. )ताताचार्याणां मीमांसकवरेण्यानां सामान्य-शास्त्राध्ययनानन्तरं वेदान्तग्रन्थकालक्षेपार्थं कुत्र वा गन्तव्यमिति मनसि विचारे आगते सति तदात्वे पञ्चनदकलाशालाप्राचार्यैः वेदान्ताचार्यैः इत्थमाश्वासः प्रदत्तः—मया सह भवान् वलयपेट्टै आश्रमं प्रति आगच्छतु तत्र विलसन्ति आचार्यपादाः श्रीनिवास-ताताचार्याः, तेषां सविधे निवेद्यतां वेदान्तग्रन्थकालक्षेपः कर्तव्य इतीच्छा मे वर्तते श्रीमद्भिरनुग्राह्य इति । तथैव ते वेदान्ताचार्यैः सह समागत्य तदाश्रमे स्वामिपादान् प्रणम्य स्वाभिमतं न्यवेदयन् । स्वामिपादाश्च तथाऽस्तु ओमित्यङ्गीकृत्य तानन्वगृह्णन् । तदानीं प्रथमदर्शनकाल एवेमे श्रीशैलताताचार्याः **"सत्सन्तानप्रसूतसदाचारनिष्ठात्म-गुणोपेतवेदविदाचार्य"** इति श्रीभाष्यकारोक्ताचार्यलक्षणसम्पन्ना इमे एवास्माभिरा-श्रयणीयाः सम्प्रति वेदान्ताचार्याणां पुरुषकारेणास्माकं महद्भाग्योदयो जात इति अमन्दानन्दभरिता अभूवन् । (प्रिन्सुपाल्) वेदान्ताचार्याः स्वामिनां सविधे वेदान्तग्रन्थकाल-क्षेपस्य प्रथमपर्याये प्रथमशिष्याः । एवं सरस्वतीमहाल्-रङ्गाचार्यप्रभृतयोऽपि पण्डिता-स्तेषां सविधे वेदान्ताध्ययनमकुर्वन् । पण्डितराजश्रीशैलताताचार्याणामन्यादृशप्रतिभा-विशेषमवलोक्य स्वामिपादास्तेषु अतीव प्रसन्नचेतसोऽभूवन् । स्वामिपादानां सुपुत्राः श्रीकृष्णताताचार्याः, एवं द्वितीयजामातरः कोतिमङ्गलं वरदाचार्याश्च तेषां सविधे वेदान्तकालक्षेपं चक्रुः । श्रीशैलताताचार्याः, को. वरदाचार्याः, श्रीकृष्णताताचार्याश्च त्रयोऽपि अतीव मैत्रीभूय स्वामिनामन्तरङ्गकैङ्कर्येषु बद्धश्रद्धास्तेषामिङ्गितमात्रेण तदादेशं सर्वमपि पर्यपालयन् । तेषामादेशेन तदात्वे बाल्ये वयस्येव गोपालदेशिकाह्नि-

कादिग्रन्थांश्चेमे सम्पादयन् । श्रीकृष्णताताचार्याश्चाल्पीयसि वयस्येव स्वभागिनेय-विल्लियंपाक देवनाथाचार्य-तल्लं सुन्दरराजाचार्यप्रभृतीनां समग्रं वेदमध्यापया-मासुः, एवं काव्यनाटकादींश्च । श्रीशैलताताचार्या मीमांसाशास्त्रे मीमांसाऽभ्युदयम्, मीमांसापरिभाषापरिष्कारः, अक्षरार्थं इति मीमांसापरिभाषाया एव व्याख्याद्वयम्, अर्थसंग्रहस्य तन्त्रप्रकाशिकेति व्याख्यां च प्रणिन्युः । एवमुद्यानपत्रिकायाः प्रधान-सम्पादकाश्चासन्, बह्वश्शास्त्रीयविषया विमृश्य प्रकाशिताश्च । तेषां कृत्यविशेषाल्लब्धो-पकारास्संस्कृतज्ञास्सर्वेऽपि तदधमर्णा एव । संस्कृतलोके तत्परिचयरहितजनः कोऽपि नास्ति, तथा भारते प्रसिद्धा कीर्तिस्तेषाम् । सर्वोऽप्येष आचार्यस्य प्रभावो यच्छिष्यो महिमानमेति ।

आचार्यचरणा इमे प्रातः वेदान्तग्रन्थानध्याप्य उपादानकाले वैराग्यनिधिश्रीम-न्निगमान्तमहादेशिकादिभिरनुष्ठितया धर्मशास्त्रेषूत्तमवृत्तित्वेन प्रतिपादितया उञ्च्छ-वृत्त्या भगवदाराधनार्थं तत्तदहरपेक्षितद्रव्यं सम्पाद्य तदनु माध्याह्निकस्नानादिकं विधाय विशेषतो भगवत इज्याकाले आराधनं कृत्वा अन्नवैश्वदेवादिकं च यथाशास्त्रमनुष्ठाय भागवताराधनं च विदधति स्म । ततः परं स्वाध्यायकाले स्वसमीपमागतान् शिष्य-जनान् प्रति न्यायादिसामान्यशास्त्रमध्यापयन्ति स्म । एतेषां सविधे माध्वा विजयीन्द्रा-चार्या इति प्रसिद्धाः पञ्चनदसंस्कृतकलाशालायां न्यायशास्त्रस्य प्रधानाध्यापका न्याय-शास्त्रमध्यगीषत । एवं अप्पय्यशास्त्रिप्रभृतयः स्मार्ता शैलीपाट्टराचार्यादयो वैष्णवाश्च न्यायशास्त्रादिकमपाठिषुः ।

एवं त्रिमतस्था अपि तेषां स्वामिपादानां सविधे सामान्यशास्त्राध्ययनमकुर्वन् । सम्प्रत्यपि न्यायशास्त्रे तदीयपरम्परा अनुवर्तते, यतो वेप्पत्तूरसुब्रह्मण्यशास्त्रिणो विजयीन्द्राचार्येभ्यो न्यायशास्त्रमधीतवन्तः, ते सुब्रह्मण्यशास्त्रिणां सविधे एस० आर० कृष्णमूर्तिशास्त्रिणः काञ्चीकामकोटिमठस्थानपण्डिता न्यायादिशास्त्रमधीतवन्त इति ।

इत्थमाचार्यवर्या अनवरतं पाठप्रवचनादिना शिष्यगणानुज्जीवयामासुः । एतेषां ज्ञानवैराग्यानुष्ठानसम्पदा आत्मगुणविशेषेण च परवशीकृतहृदया एतेषामाचार्य-सार्वभौमा वेदान्तरामानुजसंयमीन्द्राः "**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः**" इति गीताचार्योक्तिरेतेषां विषये अन्वर्थेति विभाव्य भगवत्सन्निधौ विशेषतः प्रपत्तिश्चानुष्ठितेति पूर्वाचार्याणां वचनं स्मरन् एतेषां इतिवृत्तमुपसंहरामि ।

श्रीवासतातार्यपदारविन्दस्रुतं मधु स्वादु निपीय भूयः ।
मत्तेन चित्तेन तव स्मरामि न चेदहं तद्भगवन् क्षमस्व ॥

यद्यपि ग्रन्थोऽयं A. D. 1909 वत्सरे एतैरेवाचार्यैः व्याख्यातृभिः ग्रन्थाक्षरैर्मुद्रितम् । तदपि इदानीं न लभ्यते, अपि च सर्वजनसुलभतायै सम्प्रति देवनागरीलिपिभिः मुद्राप्य प्रकाश्यते । इतोऽन्या एतैराचार्यपादैः प्रणीता विद्वन्मनोरञ्जिनी पिष्टपशुखण्डनरूपा **यागीयपशुमीमांसाऽपि** प्रकाशिता । सतां पुरुषाणां ऋग्यजुस्सामात्मकवेद एव नित्या श्रीरिति **"ऋचस्सामानि यजूंषि । सा हि श्रीरमृता सताम् ।"** इति वेदेनैव प्रत्यपादि । तादृशश्रीरेतेषु नितरां वसतीति तन्निवासत्वेन स्वनाम अन्वर्थयन्त इमे श्रीनिवासतातार्या इति सुगृहीतनामधेयाः प्रत्यहं सायं कुम्भघोणक्षेत्रं गत्वा भगवन्तं पुरुषोत्तमं शार्ङ्गधन्वानमपर्याप्तामृतम् आपीठान्मौलिपर्यन्तं विशेषानुसन्धानपूर्वकं संसेव्य तदीयब्रह्मोत्सवादिषु अमृतपानमिव स्वीयवेदोच्चारणजन्यकर्णसुखावहानितरसाधारणमधुरध्वनिना भगवतश्शार्ङ्गधन्वनश्चित्तमप्याकर्षयन्तो वेदपारायणगोष्ठ्यां श्रीरिव विराजन्ते स्मेति सार्वजनीनमेतत् ।

एतद्ग्रन्थप्रकाशनाय समुचितव्यवस्थां विधाय प्रकाशनकर्म साधु निर्वर्तितवद्भ्यः प्रकाशनाधिकारिभ्यो **डॉ० हरिश्चन्द्रमणित्रिपाठि**महाभागेभ्यो नितरां कार्तज्ञ्यमाविष्करोमि ।

ग्रन्थस्यास्य मुद्रणकार्यं परमश्रद्धया सुष्ठु विहितवद्भ्यो विजय( प्रेस )मुद्रणालयसंचालकाय गिरीशचन्द्राय च साधुवादा वितीर्यन्ते ।

इति विदुषामाश्रवः
**व्याख्यातृपौत्रः बक्ष्यपेट्टै**
**ना० कृ० रामानुजतातार्यः**
**राष्ट्रपतिसंमानितः**
( वेदवेदान्तविद्वान्, न्यायमीमांसाशिरोमणिः )

नावल्पाक्कम्
२०-९-९२

**श्रियः पतेरारभ्य व्याख्यात्रन्तविद्यावंशावली**

**श्रीः**

श्रीधरः
|
श्रीः
|
सेनाधिपः ( विष्वक्सेनः )
|
शठकोपः
|
नाथमुनिः
|
पुण्डरीकाक्षः ( उय्यकोण्डार )
|
राममिश्रः ( मणक्कालनंबि )
|
यामुनाचार्यः ( आलवन्दार )

परांकुशदासः (पेरियनम्बि) महापूर्णः | श्रीशैलपूर्णः (तिरुमलै नम्बि)

|
श्रीभाष्यकारः ( रामानुजः )
|
तिरुक्कुरगैपिरान् पिल्लान्
|
( एन्कलाल्वान) श्रीविष्णुचित्तः
|
नडादूरम्माल् ( वरदगुरुः )
|
वादिहंसाम्बुदाचार्यः
( किडांबि अप्पुल्लार् रामावरजः )
|
श्रीवेदान्तदेशिकः
|
ब्रह्मतन्त्र स्वतन्त्रस्वामी
|
वात्स्यवरदगुरुः—(घटिकाशतं अम्माल् )
|

आदिवण्शठकोपस्वामी
|
वरदविष्ण्वाचार्यः
|
महादयाधीशगुरुः
|
अहोबिलदेशिकः
|
षष्ठपरांकुशस्वामी
|
पञ्चमतभञ्जनं तातदेशिकः
|
कीलनीरकुन्ड्रं अनन्तदेशिकः
|
रङ्गरामानुजस्वामी
(उपनिषद्भाष्यकारः)
|
वेलामूर-रङ्गनाथाचार्यः
|
चित्तण्णा वीरराघवाचार्यः
|
वेलामूर-श्रीरङ्गपतिदेशिकः
|
कल्याणावह-श्रीरङ्गनाथदेशिकन्
|
साक्षात्स्वामी वेदान्तरामानुजस्वामी
|
गोपालदेशिकः (तिरुङ्कुडन्तै देशिकः)
|
श्रीरङ्गं श्रीवेदान्तरामानुजस्वामी
|
नावल्पाक्कं अण्णयतातयार्यंमहादेशिकः
|
नावल्पाक्कं वलयपट्टै वेदान्तरामानुजस्वामी
|
नावल्पाक्कं वलयपेट्टै श्रीनिवासताताचार्यस्वामी

## प्रकृतग्रन्थकर्तुः व्याख्यातुश्चौरसवंशावलिः

( आभगवत्तः )
( औरसवंशः )
श्रीमन्नारायणः
|
ब्रह्मा
|
अंगिराः

उतथ्यः — ०
बृहस्पतिः — ०
शठमर्षणः

१ त्रसदस्युः
२ पुरुकुत्सः
३ मद्रणः
४ मद्रणः
५ सात्यकिः
६ सत्यकामः
७ अङ्गिरसः
८ अरुणिः
९ शठः
१० मर्षणः
११ औपगविः
१२ बादरायणः
१३ रातिः
१४ विष्णुवृद्धः
|
शठमर्षणः
|
वेदान्तमुनिः
ततस्सप्तमान्नवमस्य श्रीशैलाधीशस्य पौत्राः
|
श्रीमन्नाथमुनयः
|
श्रीयामुनमुनयः (तत्पौत्राः)
|
श्रीभगवद्रामानुजाचार्याणां गुरवः श्रीशैलपूर्णाः (तन्नप्तारः)
|
तिरुक्कुरुकैप्पिरान् पिल्लान्
|
पुण्डरीकाक्षदेशिकाः
|
श्रीशठकोपदेशिकाः
|
पद्माक्षदेशिकाः
|

श्रीमन्निगमान्तमहादेशिकानां शिष्याः श्रीतिरुमलैश्रीनिवासाचार्याः

|

नरसिंहदेशिकाः

|

रामानुजदेशिकाः

|

नरसिंहदेशिकाः

|

तातदेशिकाः

|

श्रीशैलपूर्णाः

|

श्रीनिवासदेशिकाः

|

नरसिंहदेशिकाः

|

श्रीनिवासाचार्याः

|

श्रीनिवासाचार्याः

|

श्रीवेंकटाचार्याः

|

ताताचार्याः

|

तिम्मयताताचार्याः

|

श्रीनिवासाचार्याः

|

श्रीवेंकटाचार्याः



ति० च० श० नावल्पाक्कं श्री अय्याकुमारतातदेशिकः
नीलमेघतातदेशिकः
रामानुजमहादेशिकः
वेङ्कटेशपाट्टराचार्यः
श्रीनिवासपाट्टराचार्यः
(रामानुजमतसंग्रहग्रन्थकर्ता)
वेदान्ताचार्यः
रामानुजाचार्यः
कृष्णमाचार्यः
रामानुजाचार्यः
(बलयपेट्टै स्वामी)
श्रीनिवासताताचार्यः
(प्रकृतग्रन्थव्याख्याता)

# श्रीरामानुजमतसङ्ग्रहः

॥ श्रीमते रामानुजाय नमः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

श्रीमहीसेवितपदं शेषपर्यङ्कशायिनम् ।
शेषिणं सर्वजगतां शार्ङ्गिणं संश्रयेमहि ॥

॥ श्रीः ॥

हरिश्रीसैन्यराट्कारि भूनाथाब्जदृशो भजे ।
रामयामुनपूर्णार्यलक्ष्मणाम्नायशेखरान् ॥
पाट्टराचार्यतनयः श्रीनिवाससुधीमणिः ।
श्रीलक्ष्मणार्यसिद्धान्तं संगृह्णाति यथामति ॥

श्रीमद्द्वैपायन-बोधायन-रामानुजमुनिभिरुन्नीतमुपलिख्यते । तत्राखिलचिदचित्-शरीरकः परमात्मा श्रीपतिरेव शारीरकशास्त्रस्य प्रधानप्रतिपाद्यो विषयः । नित्य-नैमित्तिकवर्णाश्रमधर्मानुगृहीतया तदुपासनया तन्न्यासेन वा देशविशेषप्राप्तिपूर्वकं तत्साम्यं प्राप्तस्य कैङ्कर्यपर्यन्तपरिपूर्णब्रह्मानुभवो मोक्षः परमप्रयोजनम् ।

## रामानुजमतरीत्या पदार्थविभागः सृष्टिप्रकारश्च

तत्र अचिन्नाम चैतन्यानाश्रयो द्रव्यम् । तच्च त्रिविधम्—प्रकृति-काल-शुद्धसत्त्वभेदात् । तत्र सत्त्वरजस्तमोरूपगुणत्रयास्पदं विकारभिन्नं प्रकृतिद्रव्यम् । महदादेश्च तद्विकारत्वान्न पृथग् व्यपदेशः । तत्र प्रथमविकारो महान् । स च स्वकारणानुरोधेन सात्त्विकराजसतामसभेदेन त्रिविधः । ततश्चाहङ्काराख्यः । स च पूर्ववत्त्रिविधः । तत्र सात्त्विकाहंकारादिन्द्रियाणि । तानि च द्विविधानि—ज्ञानेन्द्रिय-कर्मेन्द्रियभेदात् । तत्राद्यं द्विविधम्—बाह्यमान्तरं चेति । तत्र बाह्यं पञ्चधा—घ्राण-रसन-चक्षुस्त्वक्-श्रोत्रभेदात् । घ्राणादीनि च क्रमेण गन्ध-रस-रूप-स्पर्श-शब्दग्राहकाणि । आन्तरं मनः । तच्च आत्मतद्धर्मसाक्षात्कारासाधारणकारणं सर्वज्ञानकारणं च । कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थभेदात्पञ्चधा । तानि च क्रमेण वचनादानगमन-विसर्जनानन्दकारणानि । अत्र चैकस्यात्मन एकमेव चक्षुरादि यावत्प्रलयमवतिष्ठते

मृतजीववत्। [१]परकायप्रवेशेऽपि सह गच्छति। [२]मुक्तविमुक्तमपि यावत्प्रलयं स्थित्वा स्वकारणे लीयते। कार्याणाञ्च कारणे लयः। अग्न्यादिषु लयश्रवणं गौणमिति सूत्रकारैरेव निर्णीतम्।

सर्वाण्यपीन्द्रियाणि अणुपरिमाणानि। बुद्ध्यध्यवसायादयो मनोहेतुकधर्माः। प्राणश्च तेषां श्रेष्ठः वायुविकारः अणुः प्राणापानादिपञ्चवृत्तिकः। तामसाहङ्काराच्छब्दतन्मात्रमाकाशस्य सूक्ष्मावस्थारूपं शब्दगुणकम्। पयसो दध्युत्पत्तौ मध्येऽवस्थान्तरवत्[३]। तच्च श्रुतिसिद्धत्वादभ्युपेयम्। एवमुत्तरत्रापि द्रष्टव्यम्। ततश्चाकाशः। राजसस्तूभयानुग्राहकः। आकाशात्स्पर्शतन्मात्रम्। ततो वायुः। ततो रूपतन्मात्रम्। ततस्तेजः। ततो रसतन्मात्रम्। तत आपः। ततो गन्धतन्मात्रम्। ततः पृथिवी। इति सृष्टिक्रमः।

## उपादानादिकारणनिरूपणम्

अत्र च प्रकृति-महदादिशरीरकः परमात्मा उपादानम्। सङ्कल्पाद्याश्रयत्वात्कालादिशरीरकत्वाच्च स एव निमित्तम्। महदहङ्कारादिशरीरकस्स एव कार्यः। एवं सृष्टानां पृथग्भूतानां तेषां विविधकार्योत्पादनासामर्थ्यं पर्यालोच्य ईश्वरस्तेषां मेलनं कृत्वा प्रधानभूतस्यार्धभागेनेतरस्यार्धभागेन च पञ्चीकरणं कृत्वा जीवद्वारेणानुप्रविश्य नामरूपे व्याकृत्य स्वयमपि तत्तन्नामरूपभागभवदित्येतत्सर्वं श्रुतिस्मृतिपुराणादिसिद्धत्वात्सर्वैः परिग्राह्यमेव। उपादानोपादेययोरभेदः "मृदेव घटः", "सुवर्णमेव कुण्डलम्" इत्यबाधिताभेदप्रत्यभिज्ञानात्। बुद्धि-शब्दान्तरादयस्तालपत्र-ताटङ्कव्यवहारादिवदवस्थाभेदमादायैवोपपन्नाः। एकस्यैव द्रव्यस्य पूर्वावस्था कारणम्, उत्तरावस्था कार्यम्, अवस्थान्तरोत्पत्तिरेवोत्पत्तिः, विनाशश्च कार्यस्य कारणे लयः, स चोत्तरावस्थाप्रहाणेन पुनः पूर्वावस्थापत्तिरित्यादि भाष्यश्रुतप्रकाशिकादौ द्रष्टव्यम्, विस्तरभयान्नेह [४]तन्यते।

## कालनिरूपणम्

अतीतादिव्यवहारहेतुः कालः, विभुर्नित्यः सर्वेन्द्रियप्रत्यक्षम्। [५]तत्तत्पदार्थग्रहकाले विशेषणतया भानात्। कलाकाष्ठादयश्च तद्विकृतयः।

---

१. **परकायप्रवेशे**—मृतपरकायप्रवेशे। मृतशरीरे विषयानुभवहेतुभूतेन्द्रियाणामभावात् स्वेन्द्रियाणामात्मप्रवेशमन्तरा तत्र प्रवेशासम्भवादिन्द्रियैस्सह आत्मस्वरूपस्यैव प्रवेश आवश्यकः। जीवत्परकाये तु धर्मभूतज्ञानव्याप्तिमात्रेण प्रवेशेऽपि तदिन्द्रियाणां तत्र सद्भावाद्विषयानुभवोपपत्तिरिति भावः। २. **मुक्तविमुक्तमपि**—मुक्तैः परित्यक्तमपि।

३. **अवस्थान्तरवत्**—कलिलत्वावस्थावत्। ४. **तन्यते**—विस्तार्यते।

५. **तत्तत्पदार्थग्रहकाले**—घटोऽस्तीत्यादिप्रत्यक्षदशायाम्। अत्रास्तित्वं वर्तमानत्वम्। तच्च तत्तज्ज्ञानाधिकरणक्षणावच्छिन्नत्वम्। तथा च कालस्य प्रत्यक्षत्वम्।

## शुद्धसत्त्वस्वरूपप्रतिपादनम्

तमोरहितं सत्त्ववत् शुद्धसत्त्वं [1]रजोरहितं वा। स चाप्राकृतो देशविशेषः। प्रकृतिमण्डलादुपरि वर्तते। तत्र परमव्योमपदादिश्रुतयः "दिव्यं स्थानमजरं चाप्रमेयं तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः" इत्यादिस्मृतयः अर्चिरादिगतयश्च प्रमाणम्[2]। तत्र सर्वाण्यपि तत्त्वानि शुद्धसत्त्वमयानि। नित्यानां मुक्तानां भगवतो लक्ष्म्याश्च लीलाविग्रहादीनि तथा।

## जीवनिरूपणम्

ईश्वरभिन्नश्चिज्जीवः स्वतश्शेषत्त्वे सति चेतनो वा। स चाणुः। सर्वशरीरव्यापिसुखाद्यनुभवः, कायव्यूहानुभवो योगिनाम्, शरीरान्तरसुखाद्यनुभवश्च तदीयधर्मभूतज्ञानव्याप्त्याऽवगन्तव्यः।

अन्यथाऽणुत्वप्रतिपादकश्रुतिसूत्रादिविरोधस्स्यात्। अर्थवादादिभिः पुण्यपापयोः भगवत्प्रीत्यप्रीतिरूपत्वावगमाच्च न तत्फलसिद्ध्यर्थं विभुत्वम्[3]। न च कर्मसामानाधिकरण्यं [4]तद्द्वारस्य नियतम्, [5]जातेष्ट्यादौ व्यभिचारात्।

स च ज्ञानस्वरूपो ज्ञानगुणकश्च, ज्ञानात्मकत्वज्ञातृत्वयोरेकत्र श्रूयमाणत्वात्। स्वरूपज्ञानस्य सुषुप्त्यादावात्मत्वानुकूलत्वैकत्वादीनि विषयाः।

## जीववृत्तिधर्मभूतज्ञाननिरूपणम्

धर्मभूतज्ञानं च स्वरूपतो नित्यं स्वप्रकाशं संसारिणां कर्मवशात् करणाधीनप्रसारं विषयावगाहि। मुक्तानामीश्वरादेश्च संकोचकाभावात्सर्वविषयम्। सुखदुःखे-

---

१. **रजोरहितं वा**—अत्र सत्त्ववच्छुद्धसत्त्वमित्यनुषज्यते। रजोरहितं सत्त्ववद्वा शुद्धसत्त्वमित्यर्थः।

२. **अर्चिरादिगतयश्च प्रमाणम्**—अत्र विभुत्वेन ब्रह्मणः प्राप्तत्वेऽपि ब्रह्मप्रापकत्वश्रवणान्यथानुपपत्त्या विलक्षणदेशविशेषविशिष्टब्रह्मप्राप्तिसाधनपरत्वाङ्गीकारावश्यम्भावात्। "इमं मानवमावर्त्तं नावर्तन्ते" इति तादृशदेशविशेषस्य प्रकृतेः परत्वसिद्धेश्च तत्र प्रमाणत्वम्।

३ **न तत्फलसिद्ध्यर्थं विभुत्वम्**—तत्पुरुषीयसुखहेतुकार्यं प्रति तत्पुरुषीयादृष्टस्य स्वाश्रयसंयोगसम्बन्धेन हेतुत्वेऽप्यदृष्टस्य भगवत्प्रीतिरूपत्वेन तदाश्रयस्य परमात्मनो विभुत्वेन युगपदनेकस्थले जीवसुखसाधनकार्योत्पत्तिनिर्बाहेण न तदर्थं जीवस्य विभुत्वमिति भावः।

४. **तद्द्वारस्य**—कर्मणः फलजनने द्वारभूतस्यादृष्टस्य।

५. **जातेष्ट्यादौ व्यभिचारात्**—अस्याः पितृनिष्ठत्वेऽपि तया पुत्र एव पूतत्वादिफलसाधनीभूतादृष्टस्य जननाङ्गीकारात्।

च्छाद्वेषप्रयत्नाश्च तदवस्थाभेदाः, पदार्थान्तरत्वकल्पने मानाभावात्। ज्ञानस्य च द्रव्यत्वाभ्युपगमान्नावस्थाविरोधः[1], प्रभावदुभयरूपत्वोपपत्तेः। प्रभा हि स्वयं तेजोद्रव्यमपि दीपादिकं प्रति गुणभूता, केवलगुणत्वे रूपादिवद् धर्मिव्यतिरिक्तस्थलेऽनुपलब्धिप्रसङ्गात्, स्वतन्त्रद्रव्यत्वे तदभावस्थलेऽप्युपलब्धिप्रसङ्गात्।

तादृशज्ञानकारणं प्रत्यक्षमनुमानमागमश्च। तज्जन्यं ज्ञानमनुभवः। संस्कारद्वाराऽनुभवजन्यं ज्ञानं स्मृतिः।

**सर्वेषां ज्ञानानां यथार्थत्वप्रतिपादनम्**

पञ्चीकरणप्रक्रियया रजतावयवानां शुक्तावपि सत्त्वात्तज्ज्ञानं यथार्थम्। अवयवानामल्पत्वाच्च कार्याक्षमत्वम्। पूर्वमीमांसायां प्रतिनिधिस्थले नीवारेषु व्रीह्यवयवास्सन्तीति तेषामेव प्रतिनिधित्वेनोपादानं नान्येषामित्युक्तम्। स्वप्ने च तत्कालीनतत्पुरुषमात्रानुभाव्याश्चर्यपदार्थसृष्टिश्रवणात्तज्ज्ञानं यथार्थमिति। अन्यथाख्यात्यनभ्युपगमेऽपि न दोषगन्धः। एवं ज्ञानस्वरूपस्तद्गुणकश्चात्मेति सिद्धम्। एवमानन्दस्वरूपस्तद्गुणकश्च। तस्य बद्धदशायां ज्ञानवत् कर्मणा तिरोधानम्।

**जीवात्मनो देहादिव्यतिरिक्तत्वं त्रैविध्यं च**

स चात्मा देहेन्द्रियमनःप्राणधीव्यतिरिक्तः, तद्व्यतिरेकानुभवात्। अनन्तश्च सुखदुःखादिवैचित्र्यात्। अनादौ काले बहूनां मुक्तावपि इदानीं संसारिणामनन्तत्वाद् भाविनामपि तथात्वात्। स च स्वं प्रति शरीरवत् परमात्मानं प्रति सर्वदा शेषभूत एव न कदाचित् स्वतन्त्रः, तदधीनकर्तृत्वाश्रयश्च। स्वातन्त्र्यादिबुद्धिरस्य भ्रान्तिरेव। स च त्रिविधः—बद्ध-मुक्त-नित्यभेदात्। बद्धस्संसारी। द्वितीयस्त्वनादौ संसारे व्याजविशेषापेक्षो भगवन्निरुपाधिककरुणावशादाचार्यकृपाविषयीकृतो विवेकवैराग्यसम्पन्नस्तदुपदिष्टमार्गेण सांगदहराद्युपासनां परमभक्तिपर्यन्तां कुर्वाणस्तदुपदिष्टां न्यासविद्यां वा प्रयुञ्जानः प्रारब्धनिवृत्तौ मूर्धन्यनाड्या निष्क्रान्तः अर्चिरादिमार्गेणातिवाहिकैर्नीतो विरजां तीर्त्वा अपास्तप्रकृतिसम्बन्धो देशविशेषं शुद्धसत्त्वं प्राप्याविर्भूतस्वाभाविकापहतपाप्मत्वादिगुणकः पञ्चशताप्सरोभिः प्रत्युद्गतो ब्रह्मालङ्कारालङ्कृतो भगवन्तं प्राप्य यथावस्थितब्रह्मस्वरूपगुणानुभवेन परमसाम्यं प्राप्तस्स्वाभिमतशेषवृत्तीः कुर्वन् आवारकाभावेनासंकुचितज्ञानानन्दप्रसरः। नित्यस्तु कदाचिदप्यस्पृष्टसंसारः। यथा—[2]आत्मत्वेऽपीश्वरस्य प्रमाणबलात्तादृक्त्वम्। एवं जीवत्वेऽपि सदापश्यदनेकसूरिश्रवणात्तादृक्त्वमिति।

---

१. द्रव्यत्वाभ्युपगमान्नावस्थाविरोधः—द्रव्यभिन्नस्यावस्थानाश्रयत्वेऽपि अस्य द्रव्यत्वेन न तद्विरोधः।

२. आत्मत्वेऽपीश्वरस्य प्रमाणबलात्तादृक्त्वम्, एवं जीवत्वेऽपि सदा पश्यदनेकसूरिश्रवणात्तादृक्त्वमिति—परमात्मा संसारबन्धवान् आत्मत्वादित्यनुमानस्य प्रमाणान्तरेण पक्षे साध्यबाधादसाधकत्ववद् अनन्तगरुडादयः संसारिणः जीवत्वादित्यनुमानस्यापि प्रमाणान्तरेण पक्षे साध्यबाधादसाधकत्वमिति भावः।

## जीवनस्य सयुक्तिकं नानात्वोपपादनम्

न चात्मबहुत्वे विवादः। ऐक्ये तु अन्येनानुभूतस्य अन्येन प्रतिसन्धानानुपपत्तेः, युगपत्सुखदुःखानुभवानुपपत्तेश्च।

न चाविद्योपाधिवशान्न विरोध इति वाच्यम्, तदैक्ये दोषतादवस्थ्यात्। तद्भेदे तु यस्त्वयाऽनुभूतस्स एव मयाऽनुभूयत इत्यनुभवानुपपत्तेः। तदविद्याकल्पितस्यैतदविद्याकल्पितस्य च भिन्नत्वादित्यादि श्रुतप्रकाशिकादौ द्रष्टव्यम्। अतस्त्रिविधा अपि जीवाः स्वतोऽनन्ताः परशेषभूतास्तच्छरीरभूतास्तदधीनाश्चेति सिद्धम्।

## परमात्मस्वरूपनिरूपणम्

अथ परमात्मा सर्वेश्वरस्सर्वशेषी सर्वशरीरः सर्वान्तर्यामी सर्वकारणं सर्वशब्दवाच्यः अखिलहेयप्रत्यनीकः कल्याणगुणैकतानस्सर्वकर्मसमाराध्यः सर्वफलप्रदस्स्वतन्त्रश्श्रीपतिः।

तत्रेश्वरत्वं नियन्तृत्वं शेषित्वञ्च। परिणतातिशयाधानेच्छयोपादीयमानत्वं शेषत्वम्, तथोपादीयमानश्शेषः, परश्शेषीति लक्षणलक्षितम्।

## शरीरलक्षणोपन्यासः

शरीरलक्षणं च "यस्य यद्द्रव्यं यावत्सत्त्वं स्वशक्यार्थे नियन्तुं शक्यं तत्तस्य शरीरमित्येकं लक्षणम्" अपृथक्सिद्धस्वभावमिति लक्षणान्तरम्। तत्र द्रव्यमिति विशेषणात् क्रियादौ नातिव्याप्तिः। यावत्सत्त्वमिति विशेषणात्पुत्रादौ नातिव्याप्तिः। दानादिना तत्र परार्थतापादनसम्भवेन यावत्सत्त्वं तदसम्भवात्। मनुष्यशरीरस्योत्पतनादौ नियमनासम्भवादव्याप्तिवारणाय स्वशक्यार्थ इति। व्याध्यादिना गमनाद्यशक्ततादशायामव्याप्तिवारणाय शक्यमिति। शक्तिरत्र योग्यता। एवञ्च देव-मनुष्य-मृग-पक्षी-सरीसृप-कीट-वृक्ष-लतागुल्मादिसाधारण्यादिदमेव निर्दुष्टं लक्षणम्। इदञ्च लक्षणमीश्वरं प्रति चिदचितोरस्त्येव।

## चिदचितोर्भगवच्छरीरत्वे श्रुत्यादिप्रमाणप्रदर्शनम्

अन्तर्यामिब्राह्मणेषु श्रुतिषु "जगत्सर्वं शरीरं ते", "अहमात्मा गुडाकेश", "अहमात्मा हि लोकानाम्", "यदम्बु वैष्णवः कायः", "तत्सर्वं वै हरेस्तनुः", "तस्मात्कायात् प्रभवन्ति सर्वे", "सोऽभिध्याय शरीरात् स्वात्" इति स्मृतिपुराणादिषु च प्रकृत्यादौ निरुपाधिकशरीरशब्दप्रयोगात्तस्य च गौणत्वे प्रमाणाभावात्तयोश्शरीरत्वमास्थेयमिति सिद्धम्। ईश्वरस्य सर्वशरीरकत्वं सर्वान्तर्यामित्वमन्तर्यामिब्राह्मणादिषु स्पष्टम्।

### भगवद्रामानुजमतरीत्या भेदाभेदश्रुतितात्पर्यवर्णनम्

एतेन भेदाभेदश्रुतीनां निर्वाहः । तथा हि भेदश्रुतीनां स्वरूपभेदविषयतया प्रामाण्यम् । अभेदश्रुतीनां च चिदचितोस्सर्वावस्थायामपि भगवच्छरीरत्वबोधनात्तत्प्रयुक्तसामानाधिकरण्यविषयतया प्रामाण्यम् । तथा च लौकिकवैदिकव्यवहारः, "वेदविद् ब्राह्मणः", "राजा स्वर्गकामः", "पुत्रः पश्यति", "पिता यजते" इत्यादिः । अत्र हि ब्राह्मणशरीरकत्वज्ञानैतद्रूपप्रकारद्वयविशिष्टैक्यमादाय सामानाधिकरण्यम् । प्रकारद्वयविशिष्टवस्त्वैक्यमादायाभेदश्रुतीनां निर्वाहः । शरीरवाचकानां च शरीरिपर्यन्तत्वं ब्राह्मणादिपदे दृष्टमिति न विरोधः, न च तत्र गौणो व्यवहारः, मुख्यत्वे बाधकाभावात् ।

### अद्वैतिमते भेदाभेदश्रुत्यर्थवर्णनं तत्खण्डनञ्च

एतेन जीवैक्यबोधने अभेदसामानाधिकरण्यं जडैक्यबोधने बाधार्थसामानाधिकरण्यं कार्यकारणाभेदबोधने आरोपितोपादानत्वादिधर्मतस्सामानाधिकरण्यमित्यादिवैरूप्यकल्पनमपास्तम् । सर्वत्रापृथक्सिद्धधर्मवाचित्वस्यैकरूप्येण सामानाधिकरण्यप्रयोजकत्वाङ्गीकारात्सिद्धं सर्वश्रुतिप्रामाण्यघटकमन्तर्यामित्वम् ।

न च ब्रह्मणस्सर्वस्वरूपत्वे निर्विकारश्रुतिविरोधः, स्वरूपस्वभावविकाराणां बालत्वयुवत्वादिवत् शरीरभूतचिदचिन्निष्ठतया स्वरूपासंस्पर्शात् । एवं निखिलजगत्कारणमपि भगवानेव ।

### रुद्रादिदेवतानां जगत्कारणत्वासम्भवोपपादनपूर्वकं विष्णोः जगत्कारणत्वस्थापनम्

न च देवतान्तराणामपि कारणत्वश्रवणादवधारणं न सम्भवतीति वाच्यम् ।

यद्यपि श्रुतिषु ब्रह्मविष्णुरुद्रेन्द्राणां कार्यत्वं कारणत्वं च श्रूयते, तथाप्येकस्योभयात्मकत्वविरोधाद्धर्मभेदेन तत्परिहारस्य सर्वसाधारणतया जगतोऽनेककारणत्वप्रसङ्गाच्च एकत्र निर्धारणेऽवश्यम्भाविनि भगवत एकस्यैव कारणत्वमिति निर्णयात् ।

न च कार्यत्वश्रुतिविरोधः, तस्योत्तरनारायणानुवाकस्थले लक्ष्मीपतित्वलिङ्गोपोद्बलितया जायमानश्रुत्या ब्रह्मरुद्रमध्यगतरक्षार्थद्वितीयमूर्त्यवतारत्वावसायात् । "रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान्" ।

"विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक्", "स्वस्वरूपात् स्वयं विष्णुस्सत्त्वेन पुरुषोत्तमः" इत्यादिप्रमाणैरेवायमर्थस्सिद्धः ।

तुरीयत्वोत्तीर्णत्ववादाश्च तादृशमूर्त्यपेक्षया, हिरण्यगर्भशिवादिशब्दाश्च आकाशप्राणादिन्यायेन नेतव्याः । सर्वशब्दवाच्यत्वञ्च अनुप्रविश्य नामरूपव्याकरणेन नामरूपभाक्त्वात्, "वचसां वाच्यमुत्तमम्" इत्यादिप्रमाणाच्च सिद्धम् ।

### भगवतो हेयप्रत्यनीककल्याणगुणाकरत्वाद्युपपादनम्

निर्गुणश्रुतिश्च प्राकृतहेयगुणाभावविषयिणी। एकयैव श्रुत्या पापजरादिदोषान् प्रतिषिद्धय सत्यकामत्वादिगुणविधानात्।

"न हि तस्य गुणास्सर्वे सर्वैर्मुनिगणैरपि।
वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैः॥
"सत्त्वादयो न सन्तीशे"

"तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः।
परः पराणां सकला न यत्र क्लेशादयस्सन्ति परावरेशे"॥

"हेयाभावाच्च निर्मलम्", "समस्तकल्याणगुणात्मकोऽसौ" इत्यादिप्रमाणैश्च हेयप्रत्यनीककल्याणगुणाकरत्वञ्च सिद्धम्।

"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च", "तेऽपि मामेव कौन्तेय", "मयैव विहितान् हि तान्" इत्यादिप्रमाणात्सर्वकर्मसमाराध्यत्वं सर्वफलप्रदत्वञ्च सिद्धम्। अत एव सर्वस्वातन्त्र्यमपि।

### लक्ष्मीस्वरूपनिरूपणमुखेन भगवतोऽसाधारणलक्षणकथनम्

लक्ष्मीश्च सर्वावस्थास्वपि भगवद्विशेषणभूता तच्छेषभूता सकलजगत्स्वामिनी सर्वव्यापिनी अवतारेष्वपि तदनपायिनीति श्रुतिपुराणादिसिद्धमिति तत्पतित्वमप्यसाधारणलक्षणं बोध्यम्।

"तस्मात्सर्वेट्सर्वशेषी सर्वमूर्तिस्तदन्तरः।
सर्वहेतुस्सर्ववाच्यो हेयहीनो गुणाकरः॥
सर्वाराध्यः फलस्वामी स्वतन्त्रः श्रीपतिर्हरिः।
युक्तं द्वादशलक्ष्माणि श्रुत्युक्तानि हरेरिति"॥

एवंरूपवेदान्तार्थस्यातिगहनतया दुरवबोधत्वमाशङ्क्य भगवता परमकारुणिकेन जगदुज्जिजीवयिषया पाराशर्यरूपेणावतीर्य तत्तदर्थनिर्णायकमुत्तरमीमांसाशास्त्रं प्रणीतम्।

### अथातो ब्रह्मजिज्ञासेति सूत्रार्थविचारः

तस्येदमादिमं सूत्रम्—"अथातो ब्रह्मजिज्ञासा"। अस्यार्थः—कर्मविचारानन्तरं तस्मादेव हेतोर्ब्रह्मविचारः कर्तव्य इति। कर्मणां ब्रह्मोपासनाङ्गतया तद्विचारस्य तद्धेतुत्वम्। अत एव उभयोरप्यैकशास्त्रत्वं वृत्तिकारेणाभिहितम्।

न च कर्तृभेदो विषयभेदश्च विरोधी, काशिकावृत्तिकादम्बर्यादिषु कर्तृभेदस्य षट्काध्यायभेदेन विषयभेदस्य च तद्विरोधित्वादर्शनात्।

पुराणन्यायमीमांसेत्यादिना विद्यास्थानेषूभयोरैक्येन परिगणनाच्च। क्वाचित्कार्थविरोधस्यैकग्रन्थे पूर्वोत्तरविरोधवद् यथाकथञ्चित्परिहर्तव्यत्वात्। अत एवोभयोः पूर्वोत्तरव्यवहारस्सार्वजनीनस्संगच्छते।

**अध्यायार्थस्य सङ्ग्रहेणोपन्यासः**

तत्रादौ चतुस्सूत्र्या वेदान्तानां व्युत्पत्त्यभाव-विषयाप्रतिपत्तिमानान्तरसिद्धार्थत्व-अफलार्थत्वैश्शास्त्रानारम्भ आशङ्क्य परिहृतः। शेषेणाध्यायेन कारणत्वस्यायोगान्ययोग-व्यवच्छेदसिद्धये अस्पष्टतरास्पष्टच्छायानुसारीणि प्रकृतिजीवलिङ्गवाक्यानि पादचतुष्टयेन विचारितानि। द्वितीयेन च उक्तकारणत्वस्थिरीकरणायान्यस्मृतितर्कनिरासेन परपक्ष-प्रतिक्षेपेणाकाशाद्युत्पत्ति विचारेण जीवोपकरणेन्द्रियाद्युत्पत्ति निर्णयेन चाविरोधस्समर्थितः। तृतीयेन चोपायः जीवगत्यागत्यादिविचारेण स्वप्नमोहविचारेण च वैराग्यम्, ब्रह्मण उभयलिङ्गत्वादिनिर्णयेन तत्राभिरुचिं चोत्पाद्य विद्यावैविध्यशाखान्तराम्नातगुणोप-संहारादिविचारेण कर्माङ्गकत्वनिर्णयेन च प्रतिपादितः।

तुरीयेन च विद्यानिष्पत्तितत्कालीनपुण्यपापाश्लेषादिविचारेणोत्क्रान्तिमार्ग-निर्णयाभ्यां देशविशेषप्राप्तिस्वस्वरूपाविर्भावसार्वज्ञ्यानन्दादिब्रह्मसाम्यनिर्णयेन च फलं निरूपितम्। एवं शारीरकशास्त्रप्रतिपादितं सकलश्रुतिस्मृतीतिहासपुराणादिगोचरं निखिलचिदचिच्छरीरकम् अखिलहेयप्रत्यनीककल्याणगुणैकतानं परं ब्रह्म नारायण इति सिद्धम्।

निखिलचिदचिन्मूर्तिस्सर्वान्तरोऽखिलकारणम्।
गुणगणनिधिः श्रीमान् हेयोज्झितः श्रुतिगोचरः॥
अनितरपरभक्तिन्यासोऽथवाऽत्र परं हि तत्।
वितमसि पदे तस्य प्राप्तिः फलं च परं मतम्॥

पाट्टराचार्यतनयः श्रीनिवाससुधीमणिः।
अकरोल्लक्ष्मणाचार्यमतसिद्धान्तसंग्रहम्॥

॥ श्रीमते रामानुजाय नमः॥
॥ श्रीमते कुमारतातदेशिकाय नमः॥

**॥ श्रीशैलकुलतिलकचतुर्वेदशतक्रतुश्रीकुमारताददेशिकपौत्रैः श्रीपाट्टरार्यतनयैः श्रीनिवासपाट्टराचार्यैर्विरचितो रामानुजमतसङ्ग्रहस्सम्पूर्णः॥**

## उपसंहारश्लोकाशयवर्णनम्

विशिष्टाद्वैतसिद्धान्तसिद्धानर्थान् स्वेन पूर्वोक्तान् ग्रहणसौकर्याय एकेन श्लोकेन सङ्गृह्य दर्शयति—**निखिलेति ।** श्रीमान् श्रियः पतिः। **अखिलकारणं** चेतनाचेतनात्मकनिखिलप्रपञ्चस्य उपादानं निमित्तं च। "सदेव सौम्येद'मित्यनेन उपादानतया "अद्वितीय"मित्यनेन निमित्तत्वस्य च सच्छब्दवाच्ये ब्रह्मणि श्रीपतौ प्रतिपादितत्वात्। निखिलजगदुपादानत्वोपयोगिनिखिलचिदचिद्वैशिष्ट्यमाह—निखिलचिदचिन्मूर्त्तिरिति । ब्रह्मणो "निरवद्यं निरञ्जन"मित्यादिना विकारादिदोषशून्यत्वं प्रतिपादितम्। तस्य उपादानत्वाङ्गीकारे मृदादेर्घटादिरूपविकाराश्रयत्ववद् ब्रह्मणोऽपि जगद्रूपविकाराश्रयत्वापत्तेर्निर्विकारत्वश्रुतिः परित्यक्ता स्यादिति शङ्का। सा च उक्तविशेषणेन निरस्ता भवति। चेतनाचेतनात्मकवस्तुविशिष्टस्यैव ब्रह्मण उपादानत्वेन विशेषणीभूतवस्तुन्येव विकाराश्रयत्वं विश्राम्यतीति विशेष्यभूतब्रह्मणि तादृशदोषप्रसक्त्यभावात्। न च ब्रह्मणि अवस्थाश्रयत्वाभावात् तद्रूपमुपादानत्वं न सम्भवति; किन्तु स्वविशेषणीभूतचेतनाचेतनात्मकवस्तुन्येवेति वाच्यम्। ब्रह्मणि श्रूयमाणं जगदुपादानत्वं निर्विकारत्वश्रुत्याऽनुपपद्यमानं सद् द्वारतया चेतनाचेतनात्मकं वस्तु कल्पयति, न तावता ब्रह्मण उपादानत्वाभावश्शङ्क्यः, द्वारेण द्वारिणो अन्यथासिद्धिशङ्काया अनुपपन्नत्वात्। मीमांसकैर्यागस्याशुतरविनाशिनः कालान्तरभाविस्वर्गसाधनत्वश्रुत्युपपत्तये अपूर्वस्य द्वारत्वं परिकल्प्य स्वर्गसाधनत्वं सद्वारकं मुख्यमेव यागे उपपादितम्। किं च "व्रीहीन् प्रोक्षती"त्यादिश्रुतिविहितप्रोक्षणादेः परमापूर्वं प्रति शेषत्वं व्रीहियागाभ्यामुभाभ्यां सद्वारकं मुख्यमेव तत्र तत्रोपवर्णितम्। तद्वदेवात्रापि सद्वारकस्योपादानत्वस्य मुख्यस्यैव ब्रह्मणि निर्वोढुं शक्यत्वात्। परमात्मानं प्रति जगतश्शरीरत्वप्रतिपादनम् अन्तर्यामिब्राह्मणादिषु द्रष्टव्यम्। सर्वशरीरत्वोपपादकं विशेषणमाह—सर्वान्तर इति। सर्वेषामन्तः प्रविश्य नियन्ता इत्यर्थः। तथा च शरीरत्वस्य नियाम्यत्वरूपत्वेन सर्वेषां परमात्मनियाम्यत्वेन तं प्रति शरीरत्वात् तस्य सर्वशरीरकत्वसिद्धिरिति भावः।

ननु "न ह वै सशरीरस्य सतः प्रियाप्रिययोरुपहतिरस्ति, अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इति शरीरसम्बन्धस्य सुखदुःखहेतुत्वोपपादनात् परमात्मनस्सर्वशरीरकत्वे तत्प्रयुक्तसुखदुःखोपभोगत्वं स्यादित्यत्राह—**हेयोज्झित इति ।** हेयैः सुखदुःखादिभिः उज्झितः परित्यक्त इत्यर्थः। तत्र किं प्रमाणमित्यत्राह—**श्रुतिगोचर** इति। "अपहतपाप्मा विजर" इत्यादिश्रुतिरेव तत्र प्रमाणमिति भावः।

यद्यपि शरीरसम्बन्धस्य सुखदुःखहेतुत्वं "न ह वै सशरीरस्य" इत्यादिश्रुतिः वदति, तथापि सा श्रुतिः कर्मकृतशरीरसम्बन्धस्यैव तथात्वं वदति।

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति" ॥

इति परमात्मनः कर्मफलानुभवाभावप्रतिपादनाद् न तस्य सुखाद्यनुभवप्रसङ्ग इति भावः।

नन्वेवं सति हेयगुणनिषेधवद्गुणसामान्यस्यापि "निर्गुणं निरञ्जन"मित्यादिना निषेधात् कारणत्वोपयोगिज्ञानशक्त्यादेरभावात् परमात्मनः कारणत्वमसम्भवदुक्तिकमेवेत्याशङ्कां निराकरोति—**गुणगणनिधिरिति**। ज्ञानशक्त्यादिसकलकल्याणगुणाकर इत्यर्थः। यस्सर्वज्ञस्स सर्ववित्, यस्य ज्ञानमयं तपः, पराऽस्य शक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया च, सत्यकामस्सत्यसङ्कल्पः" इत्यादिभिस्तादृशगुणगणप्रतिपादनात् तस्य तद्वत्त्वमिति भावः। न च निर्गुणश्रुतिविरोध इति वाच्यम्, सामान्यनिषेधस्य विशेषविधिसद्भावे सति विशेषनिषेधे तात्पर्यावसानावश्यंभावात्। "अपहतपाप्मा विजर" इत्यादिविशेषनिषेधसद्भावात्, सामान्यनिषेधस्य विशेषविधिसद्भावे तद्व्यतिरिक्तविषयकत्वावश्यकत्वात्, "सत्यकामस्सत्यसंकल्पः" इत्यादिविशेषविधिसद्भावाच्च, निर्गुणश्रुतेः हेयगुणनिषेधतात्पर्यकत्वेन विरोधाभावात्।

श्रुतिगोचर इत्यनेन पूर्वार्धस्थप्रथमान्तपदेन सर्वं तत्र विद्यमानं प्रथमान्तं सम्बद्ध्यते, निखिलचिदचिन्मूर्तिः श्रुतिगोचरः, सर्वान्तरः श्रुतिगोचरः अखिलकारणं श्रुतिगोचर इति रीत्या सम्बन्ध ऊहनीयः। निखिलचिदचिन्मूर्तित्वेन श्रुतिप्रतिपाद्य इति दिशा अर्थोऽप्यवगन्तव्यः।

अथोत्तरार्धेन परमपुरुषार्थो देशविशेषविशिष्टपरमपुरुषप्राप्तिः, साक्षात्तदुपायभूते च भक्तिप्रपत्ती इति वदति—अनितरपराभक्तिरिति। अत्र—आयससौवर्णश्रृङ्खलासदृशसुकृतदुष्कृताभिवृद्धिहेतुभूतमोहमषीमलिनप्रकृतिमण्डले। अनितरपराभक्तिः परं हितम्। अथवा न्यासः परं हितमित्यन्वयः। भक्तेरनितरपरत्वं नाम अनन्यप्रयोजनत्वम्, परमात्मप्राप्तिव्यतिरिक्तफलकामनयाऽननुष्ठीयमानत्वमिति यावत्। एतादृशभक्त्यभिप्रायेणैव "भक्त्या त्वनन्यया शक्य" इत्युक्तम्। अनन्ययेति पदस्यानन्यप्रयोजनत्वार्थकत्वं श्रीमत्तात्पर्यचन्द्रिकायामनुगृहीतम्।

"तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते" इत्यत्र एकभक्तिशब्दस्य ईदृशार्थकत्वमेव श्रीमद्गीताभाष्यतात्पर्यचन्द्रिकयोस्स्पष्टमभिधीयते। हितम्—इष्टसाधनम्, इष्टं च निश्शेषाविद्यानिवृत्तिपूर्वकसर्वदेशसर्वकालसर्वावस्थोचितसर्वविधकैङ्कर्यपर्यन्तविभूतिद्वयविशिष्टब्रह्मविषयकनिरन्तरानुभवरूपं ज्ञानम्। हिते परत्वं च द्वारनिरपेक्षत्वम्। एतेन

नामसङ्कीर्तनादेर्मोक्षसाधनत्वप्रतिपादकवचनानां "नान्यः पन्था" इति निषेधस्य च विरोधशान्तिः कृता भवतीति बोध्यम्। "भक्त्या परमया वापि प्रपत्त्या वा महामते" इत्यनेन भक्त्या सह वैकल्पिकमुपायत्वं न्यासस्योक्तम्, तदेवाह—**न्यासोऽथवाऽत्र परं हितमिति**। परं हितमित्यस्य पूर्ववदेवार्थोऽवगन्तव्यः। फलस्वरूपमाह—**वितमसि पद** इत्यादिना। **तस्य** श्रीपतेः। तच्छब्दस्य बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्न-वाचकतया पूर्वं श्रीमानित्यत्र श्रियः पतित्वावच्छिन्नस्य बुद्धिस्थतया तद्वाचकत्वमस्यो-पपद्यत एवेति तच्छब्दं प्रयुञ्जानस्याभिप्रायः। **वितमसि पदे तस्य प्राप्तिः फलमिति** देशविशेषविशिष्टब्रह्मप्राप्तेः फलत्वकथनेन जीवन्मुक्तिपक्षो निरस्तः।

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः।
अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुत"॥

इत्यमृतत्वस्यात्रैव ब्रह्मप्राप्तेश्च श्रूयमाणतया शरीरसम्बन्धदशायामेव निश्शेषकर्मविनाश-पूर्वकब्रह्मप्राप्तिरूपा मुक्तिरिति जीवन्मुक्तिवादिनामभिप्रायः। स चानुपपन्नः, तथा सति

"शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङ्न्या उत्क्रमणे भवन्ति"॥

इत्यादिना अमृतत्वप्राप्तेरुत्क्रान्तिसापेक्षत्वकथनं निरर्थकमेव स्यात्। "य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत" इति शरीरोत्क्रमण-पूर्वकपरंज्योतिरूपसम्पत्त्यनन्तरमात्मनः स्वस्वरूपाविर्भावकथनमप्यसङ्गतं स्यादित्ये-वमादिदोषाणां जागरूकत्वात्। न च "अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत" इत्यस्य का गतिरिति वाच्यम्। अमृतो भवतीत्यनेन शरीरसम्बन्धितादशायामेव सम्भावितयोरुत्तरपूर्वाघश्लेषविनाशयोरेव प्रतिपादनात्, अत्र ब्रह्म समश्नुत इत्यनेन च उपासनदशायां विद्यमानब्रह्मानुभवप्रतिपादनाच्च तस्याः श्रुतेः जीवन्मुक्त्यप्रतिपादक-त्वात्। शेषं स्पष्टम्।

**[ श्रीशैलकुलतिलकचतुर्वेदशतक्रतुनावलपाक्कं बलयपेट्टै श्रीनिवासतातार्येण विरचिता टिप्पणी समाप्ता ]**

॥ श्रीः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

॥ श्रीमते पाट्टराचार्यमहादेशिकाय नमः ॥

श्रीशैलकुलतिलकचतुर्वेदशतक्रतुश्रीपाट्टरार्यतनयश्रीनिवासपाट्टराचार्यविरचितः श्लोकः—

**विष्णुस्सर्वान्तरात्मा विमलगुणनिधिर्विश्वशब्दैकवाच्यो**
**भक्त्या लभ्यः प्रपत्त्या पुनरतिसुलभो भुक्तिमुक्तिप्रदाता ।**
**जीवास्सर्वेऽस्वतन्त्राः प्रकृतिरपि तथा किङ्कराश्शङ्कराद्या**
**इत्थं त्रय्यन्तसिद्धम्मतमिदमनघं ताड्यतां जैत्रभेरी ॥१॥**

# रामानुजमतसारबोधिनी

[ श्री उ० वे० वलयपेट्टै० ना० श्रीनिवासताताचार्यमहादेशिकप्रणोता ]

श्रीमत्कोमलवल्लीपरिरब्धं संश्रये कमप्युच्चम् ।
कल्पकशाखिनमानतजनैकलभ्यं यतः फलं निखिलम् ॥

वेदान्तलक्ष्मणमुनिर्वेदान्तविमलाशयः ।
वेदान्तरङ्गचरितो वेदान्तं निखिलागमान् ॥

यो दान्तहृदयस्सोऽमेयोदान्तं मानसं मम ।
शान्तवृत्त्यन्तरं कृत्वा कान्तवृत्तौ नियच्छतु ॥

शतक्रतुचतुर्वेदश्रीनिवासार्यनिर्मितौ ।
तद्वंश्यः श्रीनिवासार्यः श्लोकौ व्याख्याति विस्तरात् ॥

तञ्जापुर्यां कदाचित्कस्यचित्सार्वभौमस्य सभायां विद्वद्वर्याणां समवायः समजनिष्ट। तदानीं स च सार्वभौमो व्यजिज्ञिपद् विद्वन्मणीनां सन्निधौ—स्वस्वाभिमतसिद्धान्तार्थनिर्धारणाय यतध्वमिति। तदनन्तरं च ते ते च विमतोदञ्चितमतिविभवाः स्वस्वसिद्धान्तसिद्धमर्थं युक्तिकलापैरहमहमिकया निरवर्णयन्। ततस्तैस्सह पञ्चचत्वारिंशद्दिनानि कथां विधाय वैकुण्ठचरणनलिनविजृम्भमाणतरङ्गिणीतरङ्गपरम्परापरिस्पर्धिप्रज्ञाधारापरिकल्पितश्रुतिस्मृतिपुराणाद्यनेकप्रमाणसमुपबृंहितयुक्तिविततिश्रेणोप्रयोगेन तान् प्रत्यवस्थातॄन् विनिर्जित्यान्तत एकैकस्मिन् दिने स्वीयविशिष्टाद्वैतसिद्धान्तानुगुणतया निर्णीतमेकैकमर्थं एकैकवाक्येन संक्षिप्य तादृशवाक्यसमुदायघटितं स्वजयप्रकाशकवाद्यविशेषवादनादेशरूपं च एकं पद्यरत्नम्, अपरं च तादृशवाक्यमात्रघटितं तदानीमेव

पण्डितसभामध्ये श्रीनीलमेघेन कलशोदधिविद्युन्मालया साकं नैरन्तर्येण हृदयदेशे धारणीयं विधाय विशदीचक्रुः श्रीशैलकुलतिलकचतुर्वेदशतक्रतुश्रीकुमारतातदेशिकनन्दन-श्रीपाट्टरार्यतनूद्भवाः श्रीनिवासपाट्टरार्या इति अद्य यावत्सार्वजनीनमेतत्।

तत्रायमादिमः श्लोकः—**विष्णुस्सर्वान्तरात्मेति।** अत्र विष्णुस्सर्वान्तरात्मेत्य-नेन यत्सर्वान्तिर्यामित्वं श्रुतिषु प्रतिपाद्यते तन्नारायणस्यैवेति निर्धारणात् शिवस्यैव तदिति वादिनो निरस्ताः।

ननु कारणस्यैवान्तरात्मत्वं "तत्सृष्ट्वा तदेवानुप्राविशत्" इत्यादिवाक्यैरवगम्यते, "कारणन्तु ध्येयम्" इति वाक्यावगतकारणत्वसमनियतमुमुक्षुध्येयत्वस्य "शम्भुराकाशमध्ये ध्येयः" इति शिव एव प्रतिपादनमिति तन्नियतकारणत्वमपि तस्यैव "सदेव", "ब्रह्म वै", "आत्मा वै" इत्यादिवाक्यैस्सदादिसाधारणशब्दघटितैर्विशेषसाकाङ्क्षैः "कारणन्तु ध्येयम्" इत्येतत्प्रकरणस्थविशेषसमर्पक'"शम्भुराकाशमध्य' इति वाक्यसहकृतैः प्रति-पाद्यते। तथा च कारणत्वव्याप्तमन्तरात्मत्वमपि तस्यैवेत्ययमर्थस्तस्मात्सर्वगतश्शिव इत्यनेनापि दृढीकृत इति कथं तन्मतनिरास इति चेत्, न, कारणत्वं नारायणस्यैवेति अन्तरात्मत्वस्यापि तत्रैव विश्रमात्। एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण इति तस्यैव तत्प्रतिपादनाच्च।

तथा हि कारणवाक्यगतसदादिशब्दानां क्वचिद्विशेषे विश्रामेऽपेक्षिते न हि शम्भ्वादि-शब्दसमर्पितार्थे विश्रामः कर्तुं शक्यः, तेषामपि साधारणत्वात्। "विश्वाक्षं विश्वशम्भुवं" "शाश्वतं शिवमच्युत"मित्यादिना नारायणेऽपि मङ्गलतमत्वाद्यवयवार्थपौष्कल्याभि-प्रायेण प्रयोगदर्शनात्। अवयवशक्त्यैव निर्वाहे रूढिशक्त्यनङ्गीकारात्, "शिवः स्थाणु"-रिति शिवशब्दस्य सहस्रनामसु नारायणनामत्वेन पठनाच्च। अतो "नारायणाद् ब्रह्मा जायत" इत्यादिवाक्यगतनारायणशब्दसमर्पितविशेष एव तेषां पर्यवसानं युक्तम्। न हि शिवादिशब्दस्यासाधारणत्वं यतो लोकवेदयोर्नारायणशब्दस्य साधारणतया प्रयोगो न दृश्यते। अतोऽस्यैव कारणत्वं प्रतिपाद्यमिति तन्नियतम्, अन्तर्यामित्वमप्यस्यैवेति न दोषगन्धः।

न च "शिवत्वादप्यवश्यत्वा"दिति शिवनामनिर्वचनं प्रक्रम्य शिवनाममध्ये "नारा अप्ययनं यस्मात्तेन नारायणस्स्मृतः" इति नारायणशब्दनिर्वचनाच्छिवनामत्वमपि नारायणशब्दस्यावश्यकमिति वाच्यम्। तत्पूर्वापरवचनपर्यालोचनायां पूर्वोपात्तवचन-घटितकूर्मपुराणस्वाध्यायस्य सृष्टिनिरूपणैदम्पर्येण प्रवृत्तत्वावगमेन शिवनामनिर्वचनेऽ-तत्परत्वात्।

"नाराणामयनं ख्यातो ह्यहमेकस्सनातनः" इति वचनस्य मोक्षधर्मस्थभगवन्नाम-निर्वचनपरस्य—"एषां निरुक्तं भगवन्मम", "वक्तुमर्हसि शुश्रूषोः—प्रजापतिपते हरेः"

इति निर्वचनप्रश्नपूर्वकत्ववत् कूर्मपुराणस्थवचनस्य तत्पूर्वकत्वाभावेन नामनिर्वचनैदम्पर्येण प्रवृत्तौ प्रमाणाभावाच्च ।

ननु दहरविद्यायामुपास्यभूतस्य दहराकाशस्य हेयप्रत्यनीककल्याणैकतानत्वम् "अपहतपाप्मा विजर" इत्यादिना प्रतिपादितम् । तच्च न विष्णौ सम्भवति–"तदेव परमा शक्तिश्शिवस्य परमात्मनः" इत्युपक्रम्य,

"येनादौ मोहितावास्तां ब्रह्मनारायणावपी"ति ।
"एवमेव विवादोऽभूत् ब्रह्मविष्णोः परस्परम् ।
अभवच्च महद्युद्धं रजसा बद्धवैरयोः ॥
मायया मोहितौ शम्भोः कृत्याकृत्यं न जग्मतुः ।
अथाविरभवत्तत्र सनादं शब्दलक्षणम् ॥
ओमित्येकाक्षरं ब्रह्म ब्रह्मणः प्रतिपादनम् ।
तदप्यविदितं तावद् ब्रह्मणा विष्णुना तदा ॥
रजसा तमसा चित्तं तयोर्यस्मात्तिरस्कृतम्" ॥ इति ।
कारणत्वं त्वया दत्तं विस्मृत्य तव मायया ।
मोहितोऽहं कृतश्चाहं पुनरेवास्मि शासितः" ॥

इति च कर्ममूलकरजस्तमस्संबन्धस्य तत्कार्यभूताज्ञानादेश्च विष्णोः प्रतिपादनाच्छिवस्यैव च हेयप्रत्यनीककल्याणैकतानत्वम्—

"शङ्करस्य शरण्यस्य शिवस्य परमात्मनः ।
कुशलाकुशलैस्तस्य सम्बन्धो नैव कर्मभिः ॥
लोके सातिशयत्वेन ज्ञानैश्वर्यविलोकिते ।
शिवेऽनतिशयत्वेन स्थितिं प्राहुर्मनीषिणः ॥
प्रतिसर्गं प्रसूतानां ब्रह्मणां शास्त्रविस्तरम् ।
उपदेष्टा स एवासौ कालावच्छेदवर्तिना" ॥

इत्यादिप्रमाणैः प्रतिपाद्यते । तस्माच्छिव एवापहतपाप्मत्वादिविशिष्टतया उपास्यभूतदहराकाशो भवितुमर्हतीति तस्यैव मुमुक्षूपास्यत्वनियतकारणत्वमिति तन्नियतजगदन्तरात्मत्वमपि तस्यैवेत्यत्राह—**विमलगुणनिधिरिति**—हेयप्रत्यनीककल्याणैकतानोऽपि विष्णुरेवेत्यर्थः ।

"समस्तशक्तिरूपाणि तत्करोति जनेश्वर ।
देवतिर्यङ्मनुष्याख्या चेष्टावन्ति स्वलीलया" ॥
"जगतामुपकाराय न सा कर्मनिमित्तजा" ।

"इच्छागृहीताभिमतोरुदेहः", "परः पराणां सकला न यत्र क्लेशादयस्सन्ति परावरेशे"।

"मनसैव जगत्सृष्टिं संहारं च करोत्ययम्।
तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः॥
मनुष्यदेहिनां चेष्टां इत्येवमनुवर्तते।
लीला जगत्पतेस्तस्य छन्दतस्सम्प्रवर्त्तते"॥

इत्यादिसात्त्विकतमविष्णुपुराणस्थवचनैः भगवतो विष्णोः कर्मसम्बन्धाभावस्य स्वेछामात्रपरिगृहीताप्राकृतदिव्यमङ्गलविग्रहवत्वस्य निरपेक्षस्वसङ्कल्पमात्रेण सृष्टयादि-कर्तृत्वस्य तत्प्रदर्शनमुखेन कैमुतिकन्यायात्सर्वशक्तित्वस्य मनुष्यादिसाजात्या-वलम्बनं लीलामात्रमित्येतादृशार्थस्य च स्पष्टमभिधानेन हेयप्रत्यनीककल्याणैकतानत्वस्य प्रतिपादनात् शिवस्य च—

"चिन्तयन्तो हि यं नित्यं ब्रह्मेशानादयः प्रभुम्।
निश्चयं नाधिगच्छन्ति तमस्मि शरणं गतः॥"

इति ज्ञानसंकोचस्य—

"महादेवस्सर्वमेधे महात्मा हुत्वाऽऽत्मानं देवदेवो बभूव" इति कर्मवश्यत्वस्य, "तदादर्शितपन्थानौ सृष्टिसंहारकारका"विति भगवदाज्ञापारतन्त्र्यस्य—

"हिरण्यगर्भो भगवान्वासवोऽथ प्रजापति"रित्युपक्रम्य—अशुद्धास्ते समस्तास्स्यु-र्देवाद्याः कर्मयोनय इत्यनेनाशुभाश्रयत्वस्य—"रुद्रो ब्रह्माणमाश्रितः" इत्यनेन स्वापेक्षित-सिद्धयर्थमन्यभजनस्य च प्रतिपादनेन हेयप्रत्यनीककल्याणैकतानत्वाभावप्रतिपादनाच्च एतद्विरुद्धार्थप्रतिपादकतामसलैङ्गवचनान्यनादरणीयान्येवेत्यपहतपाप्मत्वादिगुणतया उपा-स्यो दहराकाशः श्रीमन्नारायण एवेति तस्यान्तरात्मत्वं निराबाधमेवेति भावः।

ननु दहरविद्याप्रतिपाद्यत्वं विष्णोरेवेत्युक्तम्, तच्च न सम्भवति। "यतो वाचो निवर्तन्ते", 'यद्वाचाऽनभ्युदितम्", "अगोचरम्", ''वचसामात्मसंवेद्य"मित्यादिभिर्वाच्य-त्वस्यैव तत्र निषेधादिति वादिनं खण्डयति--**विश्वशब्दैकवाच्य इति**—विश्वेषामपि शब्दानां मुख्यवृत्त्या वाच्य इत्यर्थः।

"तस्योदिति नाम", "अथ नामधेयं सत्यम्", "सर्वे वेदा यत्रैकं भवन्ति", "वेदैश्च सर्वैरहमेव वेद्यः", "वचसां वाच्यमुत्तमम्" इत्यादिभिर्वाच्यत्वं श्रुत्यादिभिरेव प्रतिपाद्यत इति नावाच्यत्वशङ्का समुदेतुमलम्।

न च "यतो वाचो निवर्तन्त" इत्यादिप्रमाणानामनवकाशताप्रसङ्ग इति वाच्यम्, "सैषाऽऽनन्दस्य मीमांसा भवती"त्यादिना ब्रह्मानन्दस्यापरिच्छेद्यत्वप्रतिपादनेन ब्रह्मणोऽनवच्छिन्नानन्दरूपत्वादियदितिपरिच्छिद्यप्रतिपादनानर्हतायामेव तत्तात्पर्यात्।

न च "यतो वाच" इत्यादिप्रमाणानि मुख्यवृत्त्या प्रतिपाद्यत्वाभावं वदन्ति "तस्योदिति नाम", "सर्वे वेदा यत्रैकं भवन्ती"त्यादीनि च लक्षणाप्रतिपाद्यत्वं वदन्तीत्यविरोध इति वाच्यम्, मुख्यवृत्त्या केनचित्पदेन प्रतिपाद्यमानोऽर्थ एव पदान्तरेण लक्षणया प्रतिपाद्यत इति स्वीकारेण मुख्यवृत्त्या वाच्यत्वस्य ब्रह्मणि सिद्धेस्तदभावस्य प्रमाणेन प्रतिपादनासम्भवात्।

न च तथापि सर्वैरपि शब्दैर्मुख्यवृत्त्या प्रतिपादन ब्रह्मणः कथम् ? गवादिशब्दाः लोकव्युत्पत्त्या तत्तत्पिण्डविशिष्टचेतन एव हि मुख्यवृत्त्या गृहीताः, तेषां ब्रह्मणि मुख्यवृत्तौ गौर्ब्रह्म घटो ब्रह्मेति प्रयोगोऽपि ह्यापद्येतेति वाच्यम्। अन्तर्यामिब्राह्मणादिषु "जगत्सर्वं शरीरं ते", "तत्सर्वं वै हरेस्तनुः", "चराचराणि भूतानि सर्वाणि भगवद्वपुः" इत्यादिषु च चेतनाचेतनात्मकस्य कृत्स्नस्य प्रपञ्चस्य ब्रह्मशरीरत्वप्रतिपादनाच्छरीरवाचकशब्दानां शरीरिणि मुख्यवृत्तेः "देवो मनुष्यो जातः, बालो युवा जातः" इत्यादिव्यवहारेणैव सिद्धेः शरीरवाचकशब्दानां शरीरिणि मुख्यवृत्त्यभिप्रायेणैव वामदेवादीनाम् "अहं मनुरभव"मित्याद्यनुसन्धानदर्शनाच्च ब्रह्मणः सर्वशब्दैरपि मुख्यवृत्त्या प्रतिपाद्यमानत्वस्योपपन्नतमत्वात्।

न च गौर्ब्रह्मेत्यादिप्रयोगापत्तिस्तदवस्थैवेति वाच्यम्, पामराणां जगतो ब्रह्मशरीरत्वाप्रतिपत्त्या गवादिशब्दानां तत्पर्यन्तत्त्वाज्ञानादेव तथा अप्रयोगात्। निरूपकाणां तथा प्रयोगस्येष्टत्वात्। तथा च विष्णुशब्दवाच्यस्य परस्य ब्रह्मणो वाच्यत्वस्य निष्प्रत्यूहत्त्वेन दहरविद्याप्रतिपाद्यत्वं सम्भवत्येवेति न दोषलेशावकाशः।

अथ तत्त्वमस्यादिवाक्यजन्यज्ञानमात्रस्य मोक्षसाधनत्वं प्रतिपादयतो मतं निराकरोति—**भक्त्या लभ्य इति**—तत्त्वमस्यादिवाक्यजन्यज्ञानमात्रस्य मोक्षसाधनत्वं न सम्भवति "निदिध्यासितव्य उपासीत प्रज्ञां कुर्वीत" इत्यादि विधिवैयर्थ्यप्रसङ्गात् अप्राप्ते हीति न्यायात्। तादृशवाक्यजन्यज्ञानस्याध्ययनविधिसिद्धसांगसशिरस्काध्ययनगृहीताक्षरराशिविशेषापातप्रतीतार्थविशेषनिर्णयरागप्राप्तश्रवणमात्रसिद्धत्वात् तावन्मात्रेण बाधनिवृत्तेरनुभवविरुद्धत्वाच्च। न हि कश्चित्तत्त्वमस्यादिवाक्यजन्यज्ञानमात्रेण निवृत्तसंसारो दृष्टचरः। तदिदमभिप्रेत्योक्तमापस्तम्बेनापि—"बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धं बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेते"ति।

न च वाक्यजन्यज्ञानं श्रवणमनननिदिध्यासनादिना भेदवासनायां निरस्तायामेवाभेदज्ञानसामान्यरूपं जन्यत इति ध्यानविधिसार्थक्यमिति वाच्यम्, अन्योन्या-

श्रयदोषदुष्टत्वात्तथाऽभिधानस्य। तथा हि—ध्यानं हि नाम विषयविशेषविषयकस्मृतिसन्ततिरूपम्, तच्चानुभवमन्तरा न सम्भवमर्हतीति तत्र वाक्यजन्यानुभवरूपज्ञानापेक्षाऽऽवश्यकी। तादृशस्मृतिसन्तानरूपध्यानविषयीभूतब्रह्मविषयकवाक्यजन्यानुभवव्यतिरिक्तानुभवस्यासम्भवात्। त्वदुक्तरीत्या वाक्यजन्यज्ञानस्य ध्यानसापेक्षत्वमिति परस्परसापेक्षत्वम्।

न च तत्त्वमस्यादिवाक्यजन्यज्ञानसामान्यं प्रति न ध्यानसापेक्षतां वदामः; किन्तु तज्जन्यसाक्षात्कारात्मकज्ञान एव। वाक्यजन्यसाक्षात्कारभिन्नानुभवेन ध्यानं जन्यते, ध्यानेन च वाक्यजन्यसाक्षात्काररूपज्ञानविशेषो जन्यत इति नान्योन्याश्रयणावकाश इति वाच्यम्। वाक्यजन्यसाक्षात्काररूपज्ञानस्य शशविषाणायमानत्वेन तत्र ध्यानसापेक्षत्वकथनस्य महिषो मदीयो मदनुभवमात्रसाक्षिकं क्षीरं दोग्धि तदर्थमिदं पात्रं नीयत इति वचनवदतिहास्यत्वात्। तर्हि अस्मदुक्तज्ञानापेक्षया विलक्षणीभूता का? सा भक्तिर्नामेति चेत्, प्रतिदिनमेधमानभगवदाराधनरूपयज्ञाद्यनेकमहत्तरकर्मकलापप्रमुषितरजस्तमोभिभवविवृद्धसत्त्वान्तःकरणपुरुषमात्रसाध्या अहरहरभ्यासाधेयातिशया आप्रयाणादनुवर्त्तनीया दर्शनसमानाकारा प्रीतिरूपतापन्ना स्वात्मशरीरकसत्यत्वज्ञानत्वाद्यनेककल्याणगुणपरिकर्मितपरब्रह्मविषयिणी अविच्छिन्नस्मृतिसन्तानरूपा शेमुषीति युष्मत्पक्षोक्ता दोषा नास्माकमिति रमणीयमेव। ननु प्रपत्तेस्साक्षान्मोक्षसाधनत्वं नास्ति—

"आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः।
इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा"॥
"हरिरेकस्सदा ध्येयो भवद्भिस्सत्त्वसंस्थितैः"।

"स्मर्तव्यस्सततं विष्णुः", "भक्त्या त्वनन्यया लभ्यः" इत्यादिभिर्भक्तेरेव मोक्षसाधनतया इतरव्यावृत्तिपुरस्सरं भक्तिप्रपत्त्यादिसकलशास्त्रार्थप्रवर्तकैर्व्यासादिभिरभिधानात्।

न च तर्हि प्रपत्तिविधिवैयर्थ्यमिति वाच्यम्, अङ्गप्रपत्तिपरतयाऽपि विधिसार्थक्यादिति केचित्। तान् प्रत्याह—**प्रपत्त्या पुनरतिसुलभ इति**—पुनश्शब्दस्तुकारार्थकस्सन् भक्त्यपेक्षया प्रपत्तेर्वैलक्षण्यं द्योतयति। तदेव वैलक्षण्यं प्रकाशयति—**अतिसुलभ इति**—विष्णुरित्यत्राप्यनुषज्यते। विष्णुः प्रपत्त्या साक्षादतिसुलभ इत्यर्थः। विष्णोरतिसुलभत्वं नाम सुकरत्वसकृत्कर्तव्यत्वादिगुणविशिष्टपूर्वोक्तोपायलभ्यत्वमेव। तथा च प्रपत्तेर्भक्त्यपेक्षया वैलक्षण्यलाभः। न हि भक्तेस्सुकरत्व-सकृत्कर्तव्यत्वादिकमस्ति। "विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन", "स खल्वेवं वर्तयन् यावदायुषम्" इत्यादिभिर्दुष्करयज्ञाद्यङ्गकत्वाप्रयाणादनुवर्तनीयत्वादेः प्रतिपादनात्।

न च प्रपत्तेरपि वेदनत्वाविशेषात्पूर्वोपात्तवचनेन यज्ञाद्यङ्गकत्वसिद्धेस्सुकरत्वं कथमिति वाच्यम्। प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यते। "सर्वधर्मान्परित्यज्य" इत्यादिना आनुकूल्यसंकल्पाद्यतिरिक्ताङ्गानपेक्षत्वकथनेन यज्ञाद्यङ्गकत्वनिवृत्तेः।

न च सकृत्वं कथमिति शङ्कनीयं "सकृदेव प्रपन्नाये"त्युक्तत्वात्। न च प्रपत्तेः साक्षान्मोक्षसाधनत्वं नास्तीति शङ्कनीयम्—

"शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः।
तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम्" ॥

इति ध्यानयोगरहितस्यापि प्रपत्त्या वैष्णवपदप्राप्तिप्रतिपादनेन भक्त्यङ्गत्वव्यतिरेकेण साक्षात्साधनत्वस्यापि लाभात्।

न च तर्हि "भक्त्या त्वनन्यया" इत्यादिना भक्तिव्यतिरिक्तस्यानुपायत्वप्रतीतेः का गतिरिति वाच्यम्, अनन्ययेत्यस्यानन्यप्रयोजनयेत्यर्थकत्वेन—"उपायभक्तिः प्रारब्धव्यतिरिक्ताघनाशिनी। साध्यभक्तिस्तु सा हन्त्री" त्यनेन प्रपत्तेरपि भक्तित्वकथनेनानुपपत्त्यभावात्।

न च "आलोड्य सर्वशास्त्राणी"त्यादीनां कथमुपपत्तिरिति वाच्यम्, प्रपत्त्युत्तरकालं स्वयं प्रयोजनतयाऽनुष्ठेयभगवद्ध्यानपरत्वात्तेषाम्। यद्वा—ननु "आलोड्य सर्वशास्त्राणी"त्यादिना भक्तप्रपन्नोभयसाधारण्येन ध्यानस्य सदा कर्तव्यत्वविधानाद् ध्यानासंवलितसकृत्प्रपत्तिमात्रस्य मोक्षसाधनत्वं नास्ति। न च तर्हि "सर्वधर्मान्परित्यज्य मामेकं शरणं व्रजे"त्यनेन ध्यानादिनिरपेक्षसकृत्प्रपत्तिमात्रस्य मोक्षसाधनतया विधानं कथं घटेतेति वाच्यम्, तस्य भक्त्यङ्गतया प्रपत्तिविधानपरत्वादिति केचित्, तां निरस्यति—**प्रपत्त्या पुनरतिसुलभ इति**—अन्यत्सर्वं पूर्वोक्तमेव ग्राह्यम्। अथ कर्मणामपूर्वद्वारा फलप्रदत्वं वदतो मतं खण्डयति—**भुक्तिमुक्तिप्रदातेति**—ऐहिकामुष्मिकसकलफलप्रदत्वं कर्मभिराराधितस्य भगवत एव न त्वपूर्वद्वारा कर्मणामिति भावः।

अपूर्वद्वारा कर्मणां फलसाधनत्वं वदतामयमभिप्रायः। "ज्योतिष्टोमेन स्वर्गकामो यजेते"त्यादौ ज्योतिष्टोमादीनां स्वर्गादिफलसाधनत्वं श्रुतम्। तच्चाशुतरविनाशिनां तेषां कालान्तरभावित्वात्स्वर्गादिपुरुषार्थस्य तदव्यवहितपूर्वकालवृत्तित्वासम्भवादनुपपन्नमिव दृश्यते। तस्मात् श्रुत्युक्तफलसाधनत्वनिर्वाहार्थम् अनुष्ठितयज्ञादिक्रियाफलपर्यन्तावस्थायि अपूर्वं जन्यत इत्यङ्गीक्रियते। तथा च श्रूयमाणं यज्ञादीनां फलसाधनत्वं तद्वारकमेवेति नानुपपत्तिरिति। स चानिरूपण(क)मूलकः "इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः","चतुर्होतारो यत्र सम्पदं गच्छन्ति देवैः"इत्याद्याः श्रुतयः,"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इत्याद्यास्स्मृतयश्च यज्ञादिकर्मभिराराधितो

भगवानेव हि तत्तदधिकारिणां फलं प्रयच्छतीति वदन्ति। इष्टापूर्तं श्रुतिस्मृतिप्रतिपादितं कालत्रितयवर्ति निखिलमपि कर्म। बिभर्ति—तत्तदग्न्यादिदेवताऽन्तर्यामितयाऽवस्थित-स्सन् स्वीकरोति। भुवनस्य नाभिः—ब्रह्मक्षत्रभेदभिन्नसकलवर्णपरिपूर्णस्य जगत-स्तत्तत्कर्मभिराराधितस्तत्तदभिमतप्रदानेन धारक इति इष्टापूर्तमिति श्रुत्यर्थः। चतुर्होतार इत्यस्यायमर्थः—चतुर्होतारो यज्ञा यत्र यस्मिन् परमात्मनि तत्तद्देवतान्तर्यामि-तयाऽवस्थिते सति देवैस्सपदं गच्छन्ति—देवैस्संबन्धं प्राप्नुवन्ति। तथा च तत्तच्छ-रीरकतया परमात्मन एव यज्ञादिकर्मसमाराध्यत्वात् स्वाराध्यपरमात्मशरीरतया अग्न्यादिदेवानां तैस्सह यज्ञानां सम्बन्ध इत्यर्थः। पूर्वोक्तश्रुत्यर्थमेव प्रकाशयन्ति—

"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च"।

"यज्ञैस्त्वमिज्यसे नित्यं सर्वदेवमयाच्युत" इत्यादीनि प्रमाणानि।

"एष ह्येवानन्दयति 'अथ' सोऽभयं गतो भवति"।

"यैस्स्वधर्मपरैर्नाथ नरैराराधितो भवान्।<br>ते नरा ह्यखिलामेतां मायामात्मविमुक्तये"॥

"सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज।<br>अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः"॥

इत्यादीन्यपि मोक्षप्रदातृत्वमपि भगवत एवेति प्रतिपादयन्ति। एवञ्च तत्तदधिकारिभिः स्वर्गापवर्गाद्यर्थमनुष्ठितैर्यज्ञादिभिर्भगवतः प्रीतिर्जायते तद्विशिष्टस्स तत्तत्फलं प्रयच्छतीति किमनुपपन्नतयाऽपूर्वद्वारत्वकल्पनया।

नन्वात्मनः कर्तृत्वं नास्ति, कर्तृत्वेऽपि तस्य न परायत्तत्वम्, आत्मनोऽनेकशरीरेषु एकत्वमिति पक्षनिरासमाह—**जीवास्सर्वेऽस्वतन्त्रा इति**। जीवानाम्—

"हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्।<br>उभौ तौ न विजानीतौ नायं हन्ति न हन्यते"॥

"अहंकारविमूढात्मा कर्ताऽहमिति मन्यते" इत्यादिना कर्तृत्वाभावप्रतिपादना-त्तदभावः, जीवानां तदङ्गीकारेऽपि परायत्तत्वं तस्य न संभवति, तथा सति विधि-निषेधशास्त्राणां निरर्थकत्वप्रसंगात्। न हि पराधीनं शास्त्राणि विधिनिषेधकिंकरीकुर्व-न्तीति तेषां प्रलापः। स चासंगतः। "बोद्धा कर्ता विज्ञानात्मा", "पुरुषः प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते", "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि" इत्यादिना जीवकर्तृत्वप्रतिपादनात्। आत्मनां कर्तृत्वानादरेण प्रकृतिकर्तृत्वाङ्गीकारे तदनुभूत-कर्मणां सर्वपुरुषसाधारण्येन निखिलान्यपि कर्माणि अविशेषेण सर्वेषां पुरुषाणामुपभोगं जनयेयुरित्यापत्तिसम्भवाच्च।

न च "हन्ता चे"दिति श्रुतेरात्मनः कर्तृत्वाभावबोधिकायाः का गतिरिति वाच्यम्, आत्मनो नित्यत्वेन हननक्रियाकर्मत्वाभावेन तत्कर्मकहननकर्तृत्वाभावप्रतिपादिकाया अस्याश्श्रुतेरात्मनः कर्तृत्वसामान्याभावाबोधकत्वात् । तद्बोधकत्वे कर्तृत्वप्रतिपादकपूर्वोपात्तवचनानामनवकाशताप्रसङ्गात् ।

न च "प्रकृतेः क्रियमाणानी"त्यादिना आत्मनः कर्तृत्वाभावश्शंकनीयः "कारणं गुणसंयोगोऽस्य सदसद्योनिजन्मस्वि"ति क्वचन सहकृतेन प्रकृतेरिति वचनेन गुणत्रयसम्बन्धप्रयुक्तसांसारिकफलभोगसाधनीभूतकर्मविषयकजीवकर्तृत्वप्रतिपादनपरेण गुणकर्तृत्वबोधनप्रयुक्तात्मकर्तृत्वाभावशंकाया एवानुत्थापनात् । तद्वचनस्य ईदृशार्थकत्वानादरणे "तत्रैवं सति कर्तारम् आत्मानं केवलं तु यः" पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः" इत्यधिष्ठानादिनिरपेक्षकर्तृत्वाभावप्रतिपादनमुखेन आत्मनस्तत्सापेक्षकर्तृत्वप्रतिपादनवचनं व्याहन्येतेति ।

न च तथापि तत्कर्तृत्वस्य परायत्तत्वे पूर्वोक्तं दूषणमस्त्येवेति वाच्यम् । अस्य पारतन्त्र्यं नाम द्वितीयादिप्रवृत्तौ परमात्मानुमतिसापेक्षत्वम्, प्राथमिकी प्रवृत्तिस्तु स्वेच्छामात्रसिद्धेति तन्मात्रेण विधिनिषेधशास्त्रस्य सफलत्वात् ।

ननु तथापि सर्वेष्वपि शरीरेषु एकजीववादस्य किमायातमिति चेन्न, "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इत्यादिभिर्जीवबहुत्वप्रतिपादनात् । न च तेषामौपाधिकजीवभेदबोधकत्वम्, तथासति वस्तुतो जीवानामेकतया शरीरान्तरावच्छेदेनानुभूतस्य तदन्यशरीरावच्छेदेन सर्वेषामपि स्मरणप्रसंग इत्यादिदूषणस्य जागरूकत्वात् । जीवास्सर्वेऽस्वतन्त्रा इत्यत्र एतत्सर्वमभिप्रेतम् । सर्व इत्यनेन बहुत्वम्, अस्वतन्त्रा इत्यनेन पराधीनं कर्तृत्वम्, तयोश्च प्रमाणसिद्धत्वञ्चेत्यादिकमूहनीयम् ।

अथ सांख्याः प्रकृतिरेव परमात्मानधिष्ठिता जगदुत्पादयति यथा वा क्षीरजलादिकं चेतनाधिष्ठानानपेक्षमेव दधिनारिकेलरसादिकमुत्पादयति तथेत्याहुः । तन्मतं निराकरोति—**प्रकृतिरपि तथेति**—यथा जीवः परतन्त्रस्तथेयमपीत्यर्थः । परमात्माऽधिष्ठितैव जगदुत्पादयति प्रकृतिरिति यावत् ।

न चोक्तरीत्या अधिष्ठानमनपेक्ष्यैव तत्संभवतीति वाच्यम्, त्वदुक्तदृष्टान्तेऽपि प्राज्ञाधिष्ठितत्वस्यैव सिद्धेस्तन्निदर्शनेनात्र परमात्माधिष्ठाननिराकरणासम्भवात् ।

न च दृष्टान्ते प्राज्ञाधिष्ठितत्वसिद्धिः कथमिति वाच्यम्, "योऽप्सु तिष्ठन्नद्भ्य, अन्तर" इत्यादिश्रुतेः । प्रकृतेः प्राज्ञानधिष्ठिताया जगदुत्पादकत्वादिकं यद्यङ्गीक्रियते, तर्हि सृष्टिमात्रं प्रलयमात्रं वा कुर्यात् । प्राज्ञाधिष्ठितत्वाङ्गीकारे तु स्वसंकल्पानुगुण्येन

कदाचित् सृष्ट्यौन्मुख्यं कदाचित् प्रलयौन्मुख्यं च प्राज्ञः करोतीति प्रतिपादयितुं शक्यते। न हि प्रकृतिः स्वयमचेतनस्तथा संकल्पयितुं वा तदानुगुण्येन जगत्कर्तुमन्यथाकर्तुं वा शक्नोतीत्यादिकमिह भाव्यम् । मूर्तित्रयस्य ऐक्यं साम्यं च प्रतिक्षिपति—

**किङ्कराश्शङ्कराद्या इति—**

"विष्णुरेव परं ब्रह्म त्रिभेदमिह पठ्यते ।
सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् ॥"

"स संज्ञां याति भगवान् एक एव जनार्दनः" इत्यादिना ऐक्यप्रतिपादनात् । ब्रह्मविष्णुशिवानामैक्यमेवेत्यैक्यवादिनामभिप्रायः। स चासंगतः। पूर्वोपात्तप्रमाणानाम्—

"तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः" इत्यादिभिर्नारायणस्य सर्वान्तरात्मत्वप्रतिपादनात् तदुक्तान्तरात्मत्वप्रयुक्तैक्यप्रतिपादकत्वाद् न त्रिमूर्तीनामभेदप्रतिपादकत्वसम्भव इति ।

किञ्च—"दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः", "अतोऽहमपि ते दास" इत्यादिना विष्णोः स्वामित्वं तदितरयोस्सकलस्वेतरजीवाविशेषेण दासत्वं च प्रतिपाद्यते। न हि कश्चिदनुन्मत्तः स्वामिभृत्ययोरभेदं वर्णयति। एकक्षणावच्छेदेन स्वामित्वदासत्वरूपविरुद्धधर्मसमावेशापत्तेः । न हि विभिन्नकालावच्छेदेन तयोरेकत्र समावेशश्शक्यशंकः, यतः पूर्वोपात्तं वचनं विभिन्नकालावच्छेदेन स्वामित्वं दासत्वं च न प्रतिपादयति; किन्तु दासभूता इति स्वाभाविकमेव दासत्वम् । दासत्वस्यौपाधिकत्वे च्विप्रत्ययान्तदासशब्देनैव हि तद्वक्तव्यं स्यात् ।

तस्मादैक्यमप्रामाणिकमेव । पूर्वोक्तानुपपत्तिभिरेव साम्यपक्षनिरसनमपि वेदितव्यम्। किंकराश्शंकराद्या इत्यस्य शंकरप्रभृतयस्सर्वेऽपि दासभूता इत्यर्थः। अनेनैव देवताना सर्वासामप्यैक्यमिति मतमपि निर्मूलितम् ।

"सर्वे देवा वासुदेवं नमन्ते सब्रह्मकास्सरुद्राश्च सेन्द्रा देवा महर्षयः, अर्चयन्ति सुरश्रेष्ठं देवं नारायणं हरि"मित्यादिभिर्नन्तृनन्तव्यभावादिविरुद्धधर्मप्रतिपादनाच्च ऐक्ये अनुपपद्यमानसर्वपदप्रयोगाच्चेत्यादिकं बुद्धिकुशलैरनुसन्धेयम् । अस्मिन् श्लोके शेषं सुगममिति न विस्तृणीमहे।

**विश्वं सत्यमबाधितं च परवद्विख्यातमेव श्रुतौ**
**किञ्चैतत् स्वयमस्वतन्त्रमपरः कश्चित्स्वतन्त्रः पुमान् ।**
**तत्सृष्ट्वा तदनुप्रविश्य जगतां सत्यत्प्रकारक्रमैः**
**आविर्भाव[1]मवाप्य यस्स्वयमहो लक्ष्म्या सह क्रीडति ।।**

अथ प्रपञ्चमिथ्यात्वसाधकानुमानस्याधिकबलेनानुमानविशेषेण बाधं प्रपञ्चसत्यत्वं च वदन् निरतिशयैश्वर्यं श्रियः पतेरेवेति वदति—**विश्वं सत्यमबाधितं चेत्यादिना ।** विश्वं सत्यमबाधितं चेत्येतानि पदानि क्रमेण पक्षसाध्यहेतुबोधकानि । परवदिति दृष्टान्तप्रदर्शनम् । अनुमानप्रयोगस्त्वित्थम्—विमतं मिथ्यात्वाभाववत्, अबाधितत्वात्, योऽबाधितः स न मिथ्या, यथा परमात्मा इति । अत्र सत्यशब्दो मिथ्यात्वाभावबोधकः, अबाधितमित्येतद् विश्वस्य हेतुगर्भं विशेषणम्, तेनाबाधितत्वस्य हेतुतालाभः । अत्राबाधितत्वं बाधज्ञानाविषयत्वं नास्तीति बुद्ध्यविषयत्वमिति यावत् । न च घटो नास्ति, पटो नास्तीत्यादिधीविषयत्वस्य पक्षे सत्त्वात् तदभावरूपहेतोः पक्षावृत्तित्वेन स्वरूपासिद्धिरिति वाच्यम् । हेतुघटकबुद्धौ प्रतियोगिमद्विशेष्यकत्वविवक्षणेन प्रतियोगिमत्यभावबुद्ध्यनुदयेन तदविषयत्वस्य पक्षे अबाधात् । न चैवमपि प्रतियोगिमत्यपि तदज्ञाने अभावज्ञानोत्पत्त्या उक्तदोषो दुर्वार एवेति वाच्यम्, प्रतियोगिमत्तया ज्ञायमानविशेष्यकत्वविशेषणनिवेशे तात्पर्येण तद्वत्तया ज्ञानदशायामभावज्ञानासम्भवेनादोषात् । न चैवमपि निर्धर्मितावच्छेदकप्रतियोगिमत्ताज्ञानदशायां तत्समानधर्मिकाभावज्ञानोत्पत्त्या उक्तदोषतादवस्थ्यमिति वाच्यम्, प्रतियोगिमत्ताज्ञाने स्वसमानधर्मितावच्छेदकत्वस्य निवेशनीयत्वात् । न च तथापि रज्जुसर्पादावप्युक्तहेतोर्विद्यमानतया अनैकान्त्यम् । तत्रापि प्रतियोगिमत्ताज्ञानस्य प्रतिबन्धकतया तद्दशायामभावज्ञानानुदयादिति वाच्यम्, प्रतियोगिमत्ताज्ञानप्रतिबन्धकतायामप्रामाण्यज्ञानस्योत्तेजकतया प्रतियोगिमत्ताज्ञाने अप्रामाण्यग्रहदशायामुक्तस्थले अभावज्ञानसंभवेनादोषात् ।

न चैवं सति तुल्ययुक्त्या घटादावप्युक्तज्ञानविषयत्वस्य सत्त्वेन तदभावरूपहेतोरभावेन स्वरूपासिद्धिरिति वाच्यम्, हेतुघटकद्वितीयज्ञानस्य प्रमात्वेन विशेषणीयत्वादिति । एवं रीत्यैवोक्तहेतौ संभावितदूषणतत्परिहारौ बुद्धिकुशलैरूहनीयौ । विस्तरभयान्न लिख्येते ।

उक्तानुमानस्य पक्षसत्त्वादिपंचरूपोपपन्नतया अधिकबलत्वेन मिथ्यात्वसाधकदृश्यत्वानुमानस्य तादृशरूपशून्यतया दुर्बलत्वेन च तेनास्य बाध इति भावः ।

न च दृश्यत्वस्य तादृशरूपशून्यत्वं कथमिति वाच्यम्, "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि"रिति श्रुत्या दृश्यत्वस्य ब्रह्मणि सिद्धत्वाद् ब्रह्मणो मिथ्यात्वरूपसाध्यशून्यत्वेन विपक्षतया च रूपपञ्चकघटकीभूतविपक्षासत्त्वस्याभावात् ।

---

१. मुपेत्य ।

तथा चोक्तरीत्या सत्यत्वसाध्यकोक्तानुमानस्य निर्दोषतया प्रपञ्चसत्यत्वमनेनापि सिद्धयतीत्यपि भावः।

अथ प्रपञ्चसत्यत्वसाधने श्रुतेरपि प्रमाणत्वमाह—**विख्यातमेवं श्रुताविति।** विख्यातं—निर्णीतमित्यर्थः। अत्र विश्वमित्यनुषञ्जनीयम्। एवमित्यस्य सत्यमित्यर्थः। तथा च विश्वं श्रुतिप्रमाणजन्यसत्यत्वप्रकारकनिर्णयविषय इत्यर्थः। तथा हि—"भोक्ता भोग्यं प्रेरितारं च मत्वा", "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते" इत्यादिश्रुत्या ब्रह्मणः प्रकृतिजीवयोश्चाविशेषेण प्रतिपन्नत्वान्न तत्र ब्रह्मणः परमार्थत्वम्, अन्ययोस्तदभाव इति वक्तुमुचितम्।

न च तादृशश्रुत्या अविशेषेण तेषां प्रतिपादनेऽपि—"सदेव सोम्येदमग्र आसीत्", "आत्मा वा इदमेक एवाग्र आसीत्", "ब्रह्म वा इदमेक एवाग्र आसीत्", "तत्त्वमसि" इत्यादिश्रुतीनां चोरस्स्थाणुरित्यादिवद्बाधार्थसामानाधिकरण्येन प्रपञ्चमिथ्यात्वबोधकत्वाद् ब्रह्मव्यतिरिक्तस्य मिथ्यात्वं सिद्धयतीति वाच्यम्। तादृशश्रुतिषु सामानाधिकरण्यं यदि बाधार्थं तदा प्रपञ्चमिथ्यात्वं त्वदुक्तं सिद्धयेत, न च तत् तदर्थमिति तादृशश्रुतीनां त्वदिष्टसाधकत्वाभावात्।

न च "नेह नानास्ति किञ्चन", "मृत्योस्स मृत्युमाप्नोति", "य इह नानेव पश्यति", "इदं वा अग्रे नैव किञ्च नासीत्" इत्यादिभिः प्रपञ्चासत्त्वप्रतिपादनेन तदनुरोधादुक्तश्रुतीनां चोरस्स्थाणुरितिवद् बाधार्थसामानाधिकरण्येन प्रपञ्चमिथ्यात्वपरत्वं दुर्वारमेवेति वाच्यम्, "नेह नानास्ति किञ्चने"त्यादेः अन्तर्यामिब्राह्मणादिभिस्सर्वस्यापि ब्रह्मात्मकत्वप्रतिपादनेन तदैकार्थ्यादब्रह्मात्मकं नानाभूतं वस्तु नास्तीत्येतादृशार्थपरत्वेन नेह नानास्तीत्यादिश्रुत्यनुरोधेन तत्त्वमसीत्यादिवाक्यानां बाधार्थसामानाधिकरण्येन त्वदुक्तार्थपरत्वासिद्धेः। "इदं वा अग्रे नैव किंचनासी"दित्यादेश्च नामरूपविभागानर्हप्रलयदशाकालीनतमोऽवस्थाविशेषपरत्वात्। प्रपञ्चमिथ्यात्वबोधकत्वे अग्रशब्दवैयर्थ्यपरिहाराय कालविशेषे प्रपञ्चस्य मिथ्यात्वबोधकत्वावश्यकत्वेन तस्य त्वदनभिमतत्वात्। तादृशश्रुतेस्त्वदभिमतार्थबोधकत्वासिद्धेश्च। एतदनुरोधेनापि सदेवेत्यादिश्रुतीनां त्वदुक्तार्थपरत्वासिद्धेः। तर्हि तत्र सामानाधिकरण्यं किं निबन्धनमिति चेदवधानेन श्रोतव्यम्। "यस्य पृथिवी शरीर"मित्यादिना सर्वस्यापि वस्तुनो ब्रह्मशरीरत्वस्य ब्रह्मणस्तदात्मत्वस्य च प्रतिपादनेन अपृथक्सिद्धविशेषणत्वादात्मानं प्रति शरीरस्यापृथक्सिद्धविशेषणवाचकत्वमेव विशेष्यवाचकात्मादिपदसमानाधिकरणतयाविशेषवाचकीभूतेदमादिशब्दप्रयोगनिबन्धनम्। अत एव हि शुक्लो गौरित्यादिस्थले अपृथक्सिद्धविशेषणीभूतशुक्लरूपादिवाचकशुक्लादिपदानां तदाश्रयगवादिविशेष्यवाचकगवादिपदसमानाधिकरणतया लोके प्रयोगः। अपृथक्सिद्धविशेषणवाचकत्वाभावादेव हि दण्डी देवदत्त इत्यादिस्थले मतुबन्ततया दण्डादिशब्दप्रयोगश्च।

**न च** तर्हि शुक्लरूपवती गौरित्यपृथक्सिद्धविशेषणवाचकशुक्लरूपादिपदस्य मतुबन्तस्यैव विशेष्यवाचकगवादिपदसमानाधिकरणतया कथं प्रयोग इति वाच्यम्, अपृथक्सिद्ध-विशेषणवाचकस्य मतुप्रहितस्यैव विशेष्यवाचकसमानाधिकरणतया प्रयोग इति नियमाभावात्। पृथक्सिद्धविशेषणवाचकस्य तु मतुबन्ततयैव विशेष्यवाचकपद-समानाधिकरणतया प्रयोगनियमात्। तथा चोक्तस्थले सामानाधिकरण्यस्य बाधार्थ-त्वाभावेन तादृशश्रुतीनां प्रपञ्चमिथ्यात्वासाधकत्वेन "भोक्ता भोग्यं प्रेरितारं च मत्वा" इत्यादिना प्रतिपादितानां प्रकृतिजीवेश्वराणां मध्ये ब्रह्मण एव पारमार्थ्यम्, अन्ययोस्तद-भाव इति वैषम्ये प्रमाणाभावेन सर्वेषामपि पारमार्थ्यं श्रुत्या सिद्धं न केनापि चालयितुं शक्यमिति भावः।

**अथ** भगवतो निरतिशयैश्वर्यं वक्तुं विभूतीनामभावे ऐश्वर्यमेव न सिद्ध्यतीति कुतो निरतिशयैश्वर्यमिति शंकापनुत्तये निखिलस्यापि प्रपञ्चस्य भगवद्विभूतित्वमाह— **किञ्चैतस्स्वयमस्वतन्त्रमिति**। एतत्–विश्वशब्दवाच्यं जगत्। स्वत एव–स्वरूपत एव। वक्ष्यमाणं यद् अस्वातन्त्र्यं—तत्प्रपञ्चस्य स्वाभाविकमेव न त्वौपाधिकं तथा सति उपाधिनिवृत्त्या तत्प्रयोज्यास्वातन्त्र्यस्यापि निवृत्त्यावश्यकत्वेन तदानीं प्रपञ्चस्य स्वनियाम्यत्वरूपस्वविभूतित्वाभावेन भगवत ऐश्वर्यं तदानीं भज्येत। न हि भगवत ऐश्वर्यं कादाचित्कं लौकिकेश्वरवदिति भावः।

न च "स स्वराड्भवती"त्यादिना मुक्तस्य स्वातन्त्र्यप्रतिपादनात् कथं निखिल-प्रपञ्चस्य भगवत्पारतन्त्र्यमिति वाच्यम्। उक्तश्रुत्या कर्मकृतपरतन्त्रभावनिवृत्तेरेव प्रतिपादनात्। "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल" इत्यादिना प्रतिपन्नानादि-भगवत्संकल्पसिद्धपारतन्त्र्यनिवृत्त्ययोगात्, उक्तश्रुतेस्तत्प्रतिपादकत्वायोगाच्च। **अस्व-तन्त्रमिति**—स्वतन्त्रमनियाम्यं तन्न भवतीत्यस्वतन्त्रं भगवतो विभूतिभूतमित्यर्थः। तथा च निखिलस्यापि भगवद्विभूतित्वात्तस्य निरतिशयैश्वर्यं सम्भवत्येवेति भावः। अथ भगवतः स्वेतरसकलनियन्तृत्वानुगुणं विशेषणमाह–**अपरः कश्चित्स्वतन्त्रः पुमानिति**। अपरः—स्वापेक्षया उत्कृष्टपुरुषान्तरशून्यो न विद्यते परो यस्मादिति व्युत्पत्त्या उक्तार्थ-लाभो बोध्यः। इदं स्वतुल्यपुरुषान्तरराहित्यस्याप्युपलक्षणम्। तथा च निस्समाभ्य-धिक इत्यर्थः। अनेन "न तत्समश्चाभ्यधिकश्च दृश्यते" इति प्रमाणं प्रत्यभिज्ञापितम्। तेन चोक्तार्थस्याप्रमाणमूलत्वशंकानिरासः। अपर इति विशेषणं वक्ष्यमाणस्वातन्त्र्य-लम्भकहेतुगर्भम्। स्वतुल्यस्य स्वाभ्यधिकस्य वा कस्यचिदभावात् स्वतन्त्रः। स्वसंकल्प-मात्राधीनप्रवृत्तिनिवृत्तिक इत्यर्थः।

एतेन स्वसमस्य स्वाभ्यधिकस्य वा कस्यचित् सद्भावे स्वेन नियमने कृते स्वतुल्यपुरुषान्तरेण निवारणसम्भवान्न नियन्तृत्वं स्वाभ्यधिकविषये स्वेन नियमनकरणा-सम्भवात् स्वेतरसकलनियन्तृत्वं वा न सम्भवतीति शंका परास्ता। **कश्चित्**—एतादृशोऽ-

यमिति वक्तुमशक्यः। परमात्मनः स्वरूपतो गुणतश्चानन्तत्वाद् अयमीदृश इति परिच्छिद्य वक्तुमशक्य इति भावः।

"यतो वाचो निवर्तन्ते", "अप्राप्य मनसा सह", "यद्वाचाऽनभ्युदितम्", "सत्यं ज्ञानमनन्तं ब्रह्म",

"मतिक्षयान्निवर्तन्ते न गोविन्दगुणक्षयात्,
वर्षायुतैर्यस्य गुणा न शक्याः स ते गुणानामयुतैकदेशम्,
नान्तं गुणानां गच्छन्ती"त्यादिकमिहानुसन्धेयम्।

अथ परत्वसौलभ्योपयोगिनमर्थमाह—तत्सृष्ट्वेत्यादिना। **तत्**—चेतनाचेतनात्मकं जगत्। अग्रेऽपि तच्छब्दस्य एतत्समानार्थकत्वमवगन्तव्यम्। तदनुप्रविश्य तत्सृष्ट्वेति योजना **अनुप्रवेशपूर्वकत्वात् सृष्टेरेवमेव योजनीयम्।**

न च "तत्सृष्ट्वा तदनुप्राविश"दिति श्रुतिसमानार्थकत्वादस्य तृतीयपादस्य तादृशश्रुत्या चानुप्रवेशस्य सृष्ट्यनन्तरकालीनत्वप्रतिपादनात् कथमेवं योजना संगच्छत इति वाच्यम्, तादृशश्रुतौ च पाठक्रमस्यार्थक्रमेण बाधात्।

न चार्थक्रमोऽपि पाठक्रमानुगुण एवास्तु पाठक्रमविरुद्धस्त्वदुक्त एवार्थक्रम इत्यत्र किं नियामकमिति वाच्यम्। छान्दोग्यश्रुतौ "हन्ताहमिमास्तिस्रो देवताः, अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इत्यनुप्रवेशपूर्वकत्वकथनान्नामरूपव्याकरणस्यायमेवार्थ इत्यङ्गीकरणीयत्वात्।

न च तैत्तिरीयकोक्त एवार्थक्रम इति छान्दोग्योक्तक्रम एव तेन बाधितः किन्न स्यादिति वाच्यम्, परमात्मजीवप्रकृत्यात्मकसमुदायस्यैव संबन्धविशेषेण विशेषणविशेष्यभावापन्नस्य देवादिशब्दवाच्यतया उक्तसमुदायघटकस्य परस्य ब्रह्मण आत्मतयाऽनुप्रवेशरूपसंबन्धशून्यतादशायां देवादिशब्दप्रतिपाद्यार्थनिष्पत्त्ययोगेन तन्निष्पत्त्यर्थमनुप्रवेशस्य प्राथमिकत्वावश्यम्भावात् छान्दोग्यश्रुत्युक्तक्रमस्यैवार्थक्रमानुगुण्येनाङ्गीकरणीयतया तेन तैत्तिरीयकोक्तक्रमबाधावश्यम्भावात्। तथा चोक्तयोजनानिराबाधैवेति न कश्चिद्दोषः। एतत्सर्वं श्रीमच्छ्रुतप्रकाशिकायां श्रीमद्व्यासार्यैस्सम्यगनुगृहीतमिति तत्र सम्यग्द्रष्टव्यम्। "जगतां सत्त्यत्प्रकारक्रमैराविर्भावमुपेत्येति"। अत्र सत्त्यत्प्रकारक्रमैः जगतामाविर्भावमुपेत्येत्यन्वयः। जगच्छब्दवाच्यं प्रकृते स्थूलचेतनाचेतनविशिष्टं ब्रह्म। तस्याविर्भावो नाम स्थूलावस्थापन्नचेतनाचेतनवैशिष्ट्यमेव। अत्र जगच्छब्दवाच्यस्य विशिष्टब्रह्मण एकत्वेऽपि विशेषणविशेष्यात्मकसमुदायपर्याप्तबहुत्वसंख्याममभिप्रेत्य बहुवचनान्ततया जगच्छब्दप्रयोगः। पूर्वोक्तमाविर्भावमेव विशदयति—**सत्त्यत्प्रकारक्रमैरिति**—अत्राभेदे तृतीया। सत्त्यत्प्रकारक्रमाभिन्नो य आविर्भावस्तमुपेत्येत्यर्थः। क्रमशब्दः क्रमवदर्थकस्सन् सत्त्यत्प्रकारशब्दार्थे विशेषणतयाऽन्वेति। क्रमशब्दस्य क्रमवदर्थकत्वं "कृदभिहितो भावो द्रव्यवत् प्रकाशत" इति नियमादवगन्तव्यम्।

क्रमशब्दस्योत्तरनिपातेऽपि औचित्यात्तदर्थस्य पूर्वपदप्रतिपाद्यार्थेन समं विशेषणतयाऽन्वये बाधकाभावात् तद्विशेषणत्वं बोध्यम्। उक्तप्रकारमवलम्ब्यैव साहचर्यनियमो व्याप्तिरित्यत्र ग्रन्थकृद्भिरर्थवर्णनं कृतमिति उक्तार्थे न स्वोत्प्रेक्षामूलकत्वप्रयुक्तन्यूनता शंकनीया। अत्र क्रमश्च अचेतनस्य जीवविशेषणत्वम्, जीवस्य परमात्मानं प्रति विशेषणत्वमित्येवंरूपः। सत्त्यच्छब्दौ चेतनाचेतनपरौ। शक्यतावच्छेदके च निर्विकारत्वसविकारत्वे। ते च चेतनाचेतनयोः स्वरूपान्यथाभावाभावतत्सद्भावाभ्यामवगन्तव्ये। तथा चोक्तक्रमविशेषविशिष्टचेतनाचेतनात्मकापृथक्सिद्धविशेषणवैशिष्ट्याभिन्नो य आविर्भावस्तमुपेत्येति समुदायार्थः। अथ जगतां सत्त्यत्प्रकारक्रमै राविर्भावमुपेत्येति यथास्थानमन्वयः। जगतामित्यत्र षष्ठ्यर्थस्सम्बन्धित्वं तच्च घटकत्वम्। प्रकृत्यर्थः चेतनाचेतनसमुदायात्मकः प्रपंचः। तस्य षष्ठ्यर्थे निरूपितत्वसंबन्धेनान्वयः। षष्ठ्यर्थस्य आश्रयतासंबन्धेन सत्त्यच्छब्दार्थेऽन्वयः। सत्त्यत्प्रकारक्रमैरित्यस्य पूर्ववदेवार्थः। अत्र तृतीयार्थः प्रयोज्यत्वम्। तस्य चाविर्भावेऽन्वयः। आविर्भावो नाम उत्पत्तिः। तथा च चेतनाचेतनात्मकजगन्निरूपितघटकताश्रयपूर्वोक्तक्रमविशेषविशिष्टसत्त्यद्रूपापृथक्सिद्धविशेषणप्रयोज्योत्पत्तिमुपेत्येति समुदितवाक्यार्थः।

अत्र आविर्भावशब्दप्रतिपाद्योत्पत्तिर्नाम परस्य ब्रह्मण आद्यक्षणसंबन्धः। स च तस्मिन्न भवितुमर्हति।

"नित्यो नित्याना"मित्यादिना तस्य नित्यत्वप्रतिपादनादितिशंकावारणायाविर्भावे सत्त्यत्प्रकारप्रयोज्यत्वविशेषणदानम्। तथा च विशेषणप्रयुक्तमेव तस्योत्पत्तिमत्वं न तु स्वरूपतः। तदुत्पत्तेर्विशेषणप्रयुक्तत्वं च उत्पत्तिविशिष्टविशेषणविशिष्टत्वमेवेति "बहु स्यां प्रजायेये"त्यादेः, "नित्यो नित्याना"मित्यादेश्च न परस्परविरोधः। "नित्यो नित्याना"मित्यादेः स्वरूपतो नित्यत्वप्रतिपादकत्वात् "बहु स्या"मित्यादेश्च विशेषणद्वारकोत्पत्तिमत्त्वप्रतिपादकत्वाच्चेति। "तत्सृष्ट्वा तदनुप्रविश्ये"त्यनेन सृष्ट्यनुप्रवेशयोस्समानकर्तृकत्वप्रतिपादनात् स्रष्टृत्वमीश्वरस्य अनुप्रवेष्टृत्वं जीवस्येति वादिनो निरासः। एतावता परत्वोपयुक्तं जगत्कारणत्वमुक्तम्। अथ सौलभ्योपयुक्तविशेषणमाह—**यस्स्वयमहो लक्ष्म्या सह क्रीडतीति स्वयं**—स्वेच्छयैव। अस्याः क्रीडतीत्यनेनान्वयः। तेन क्रीडारसस्य कर्मकृतत्वनिरासः। आविर्भावमुपेत्य क्रीडतीत्यनेनाविर्भावस्य क्रीडारूपत्वलाभः। यथा धान्यं प्राप्य धनी भवतीत्यत्र धान्यस्य धनरूपतालाभस्तद्वत्। लक्ष्म्या सह क्रीडतीत्युक्त्या लक्ष्म्या अपि क्रीडारूपतादृशजगद्व्यापारसम्बन्धलाभः। तेन तस्यास्तदभावशंकानिरासः। अथवा लक्ष्म्याः क्रीडारसमात्रानुभवः। क्रीडायां तु अनुमन्तृत्वमात्रं न कर्तृत्वम्। लोके केचन क्रीडां कुर्वते, अपरे चानुमतिदानेन तां दृष्ट्वा वर्तन्ते। तज्जनितरसानुभवस्तु उभयोस्तुल्य एव दृश्यते। तद्वत् लक्ष्म्याः क्रीडाकर्तृत्वाभावेऽपि क्रीडारसानुभवो न विरुद्धः।

"यस्या वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलम् । क्रीडेयं खलु नान्यथाऽस्य रसदा स्यादैकरस्यात्तया" ॥ इति श्रीसूक्तिरत्रानुसन्धेया । लक्ष्म्या सहेत्येतत् सौलभ्योपयोगि—

"पितेव त्वत्प्रेयान् जननि परिपूर्णागसि जने
हितस्रोतोवृत्त्या भवति च कदाचित्कलुषधीः ।
किमेतन्निर्दोषः क इह जगतीति त्वमुचितैः
उपायैर्विस्मार्य स्वजनयसि माता तदसि नः" ॥

इति हि लक्ष्म्या भगवन्निग्रहनिवारकत्वमुक्तम् । लक्ष्म्या सहेत्युक्त्या पूर्वोर्धोक्तः स्वतन्त्रः किं ब्रह्मा उत रुद्र इति शङ्का परास्ता । लोके कन्दुकादिक्रीडानुगुणा शक्तिः दृश्यते, जगद्व्यापाररूपक्रीडानुगुणा तु न कुत्रापीति भगवतः केयमाश्चर्यशक्तिः जगद्व्यापाररूप-क्रीडानुगुणेतीममर्थं द्योतयति—**अहो इति** । इति संक्षेपः ।

॥ इति श्रीशैलकुलतिलकचतुर्वेदशतक्रतुश्रीकुमारताताचार्यदेशिकवंश्येन श्रीमद्वेदान्त-रामानुजसंयमिसार्वभौमकरुणाकटाक्षलब्धवेदान्तरहस्यार्थेन (वलयपेट्टैस्वामि) नावल्पाक्कं श्रीश्रीनिवासताताचार्यमहादेशिकेन विरचिता व्याख्या सम्पूर्णा ॥

॥ शुभमस्तु ॥